आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ६९

ईश्वरप्रोक्तं

# ज्ञानार्णवतन्त्रम् ।

एतत्पुस्तकं

वे० शा० रा० रा० गोखले इत्युपाह्वैर्गणेशशास्त्रिभिः

संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८३४

खिस्ताब्दाः १९१२



मूल्यं सपादरूपकः (१।४)

## अथ ज्ञानार्णवतन्त्रस्य संज्ञापत्रकम् ।

क इति संज्ञितम्—आनन्दाश्रमस्थम् ।

ख इति संज्ञितम्—आनन्दाश्रमस्थम् । अस्य लेखनकालः शकः १६६२

समाप्तमिदं संज्ञापत्रकम् ।

समाप्तोऽयं ज्ञानार्णवतन्त्रस्य विषयानुक्रमः ।

# ईश्वरप्रोक्तं ज्ञानार्णवतन्त्रम् ।

## तत्र प्रथमः पटलः ।

देव्युवाच—

गणेशनन्दिचण्डेशसुरेन्द्रपरिवारित ।
सर्ववन्द्य गणाधीश किं त्वया जप्यते सदा ॥ १ ॥
अक्षमालेति किं नाम संशयो मे हृदि स्थितः ।
शब्दातीतं परं ब्रह्म त्वमेव परमार्थवित् ॥ २ ॥
कथयाऽऽनन्दनिष्प(स्प)न्दसान्द्रमानस निश्चयात् ।

ईश्वर उवाच—

कथयामि वरारोहे यन्मया जप्यते सदा ॥ ३ ॥
अकारादिक्षकारान्ता मातृका पीठरूपिणी ।
चतुर्दशस्वरोपेता बिन्दुत्रयविभूषिता ॥ ४ ॥
अनुस्वारेण देवेशि बिन्दुनैकेन मण्डिता ।
विसर्गेण च बिन्दुभ्यां संलग्नाभ्यां विराजिता ॥ ५ ॥
कलामण्डलमाख्यातं शक्तिरूपं महेश्वरि ।
ककारादिक्षकारान्ता वर्णास्तु शिवरूपिणः ॥ ६ ॥
व्यञ्जनत्वात्सदाऽऽनन्देनोच्चारसहिता यतः ।
उच्चरेत्स्वरसंभिन्नास्तदा देवि न संशयः ॥ ७ ॥
पञ्चाशद्वर्णरूपेण शब्दाख्यं वस्तु सुव्रते ।
अकारः प्रथमो देवि क्षकारोऽन्तिम इष्यते ॥ ८ ॥
अक्षमालेति विख्याता मातृका वर्णरूपिणी ।
शब्दब्रह्मस्वरूपेयं शब्दातीतं तु जप्यते ॥ ९ ॥
शब्दातीतं परं धाम गणनारहितं सदा ।
आत्मस्वरूपं जानीहि हंसस्तु परमेश्वरः ॥ १० ॥
अस्मिन्नेव परे तत्त्वे बिन्दुत्रयविभूषिते ।
मातृकासंपुटत्वेन संस्थितं व्यक्तिमागतम् ॥ ११ ॥

---

१ ख. अगद्वन्द्य । २ क. ह्का° । ३ क. °दिसका° । ४ ख. °का वर्ण° । ५ ख. मद ।

बिन्दुत्रयं प्रवक्ष्यामि बीजरूपं वरानने ।
हकारं बिन्दुरूपेण ब्रह्माणं विद्धि पार्वति ॥ १२ ॥
सकारः सर्गबिन्दुभ्यां हरिश्चाहं सुरेश्वरि ।
अविनाभावसंस्थानाल्लोके हरिहराविति ॥ १३ ॥
ब्रह्मबिन्दुर्महेशानि वामा शक्तिर्निगद्यते ।
विश्वं वमति यस्मात्तद्वामेयं परिकीर्तिता ॥ १४ ॥
ज्येष्ठा तु वैष्णवी शक्तिः पालयन्ती जगत्त्रयम् ।
ततो रौद्री ग्रसन्ती तु क्रमेण परमेश्वरी ॥ १५ ॥
एवं बिन्दुत्रयं विद्धि गुणत्रयविभूषितम् ।
बिन्दुशब्देन शून्यं तु तथाऽपि गुणसूचकम् ॥ १६
इच्छाज्ञानक्रियारूपं भूर्भुवःस्वःस्वरूपकम् ।
पुरत्रयात्मकं विद्धि तत्त्वत्रयमयं प्रिये ॥ १७ ॥
बिन्दुत्रये महेशानि सर्वमेतत्प्रतिष्ठितम् ।
अम्बिकाबिन्दुभिर्देवि गुणत्रयपरम्परा ॥ १८ ॥
जाग्रत्स्वप्नसुषुप्तिश्च बिन्दुत्रयभवा शिवे ।
जाग्रत्सत्त्वगुणा ज्ञेया केवलं शक्तिरूपिणी ॥ १९
मनोऽथ वृत्तिविस्तारा दुःखदोषाभिलाषिणी ।
शिवरूपा सुषुप्तिस्तु सर्वव्यावृत्तिहारिणी ॥ २० ॥
देहधर्मपरित्यक्ता शिवतत्त्वस्वरूपिणी ।
तमोगुणमयी कर्म ग्रसन्ती मोक्षरूपिणी ॥ २१ ॥
सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ।
उभयैर्लक्षणैर्युक्ता तृष्णालक्षणलक्षिता ॥ २२ ॥
अवस्थात्रयमेतत्तु कथितं बिन्दुसंभवम् ।
एतस्मिन्बैन्दवे ज्ञाते तुर्यावस्थां शृणु प्रिये ॥ २३
निद्रादौ जागरस्यान्ते स्फुरत्तामात्रलक्षणा ।
अवस्था पूर्णतां प्राप्ता तुर्यावस्था परा कला ॥ २
भावाभावपरित्यक्ता गुणातीता सुनिश्चला ।
इयमेव यदा देवि मनसा प्राप्यते सदा ॥ २५ ॥

---

१ ख. पुस्तके बिन्दुशक्तिभ्यामिति पाठान्तरम् । २ ख. ग. °संबन्धाल्लो° । ...त्तक° । ४ क. °ज्ञानाक्रि° । ५ ख. °पराप° । ६ ख. °क्ता निश्चला शिवतारिणी । ...सर्वमोक्षिणी । ८ क. °क्ता यद्यथा क° ।

उन्मनी नाम सद्रूपा ज्ञानवल्ली चिदात्मिका ।
बिन्दुत्रयेण नादेन प्रसूताऽऽनन्दरूपिणी ॥ २६ ॥
बिन्दुत्रयसमायोगात्त्रिपुरानामरूपिणी ।
वर्णातीता सवर्णाऽपि केवलं ज्ञानचित्कला ॥ २७ ॥
एनां विद्यां समाराध्य सर्वज्ञत्वं मयि प्रिये ।
उपास्यते मया देवि त्रिपुरा चाक्षमालया ॥ २८ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे स्वरूपज्ञेयमात्रं नाम प्रथमः पटलः ॥ १ ॥

---

अथ द्वितीयः पटलः ।

---

श्रीदेव्युवाच—

त्रिपुरा परमेशान ज्ञानमार्गेण सूचिता ।
तत्त्वरूपेण कथय यद्यहं तव वल्लभा ॥ १ ॥
त्रिपुरायाः प्रकारस्तु मन्त्रभेदश्च किंविधः ।
सर्वं तच्छ्रोतुमिच्छामि येन सौभाग्यमाप्नुयाम् ॥ २ ॥

ईश्वर उवाच—

त्रिपुरा त्रिविधा देवि बालां तु प्रथमं शृणु ।
यया विज्ञातया देवि साक्षात्सुरगुरुर्भवेत् ॥ ३ ॥
सूर्यस्वरं समुच्चार्य बिन्दुनादकलान्वितम् ।
स्वरान्तं पृथिवीयुक्तं तुर्यस्वरविभूषितम् ॥ ४ ॥
बिन्दुनादकलाक्रान्तं सर्गवान्भृगुरव्ययः ।
शक्रस्वरसमोपेतो विद्येयं त्र्यक्षरी मता ॥ ५ ॥
गङ्गातरङ्गकल्लोलवाक्पटुत्वप्रदायिनी ।
महासौभाग्यजननी महासारस्वतप्रदा ॥ ६ ॥
महासौन्दर्यसुभगा महामृत्युविनाशिनी ।
ब्रह्मविष्णुसुरेन्द्रादिवन्दिता पापहारिणी ॥ ७ ॥
सर्वतीर्थमयी देवी स्वर्णरत्नादिदायिनी ।
सर्वलोकमयी देवी सर्वलोकवशंकरी ॥ ८ ॥

---

१ ख. °सृता कन्द°। २ ख. °मधारिका च°। ३ ख. तन्त्ररू°। ४ क. °विधिः। ५ ख. °रुप्रभः। ६ ख. °वीसंस्थं तु°। ७ क. °वाग्गुम्फपददा°। ८ ख. पुस्तके °दिमहतामिति पाठान्तरम्। ९ ख. °वंक्षेत्रम°। १० ख. °वेराजव°।

पञ्चवक्त्रेण जिह्वाभिः पञ्चभिर्नैव शक्यते ।
वाँग्भवेनेन्दुमहसा वागीशत्वप्रदायिनी ॥ ११ ॥
कामराजेन बीजेन शक्रगोपस्फुरात्त्विषा ।
त्रैलोक्यं मोहयन्तीयं शक्तिबीजेन सुव्रते ॥ १२ ॥
स्फुरत्सुवर्णवर्णेन सौभाग्यं तस्य मन्दिरे ।
एतस्याः साधनं देवि कथयामि समासतः ॥ १३
प्रातरुत्थाय देवेशि ब्रह्मरन्ध्रे निजं गुरुम् ।
स्मृत्वा देवीमयो भूत्वा तत्प्रभापटलामलः॥ १४ ॥
स्नानकर्म ततः कुर्यान्मूलमन्त्रं स्मरन्बुधः ।
त्रिवारमञ्जलौ वारि मन्त्रयित्वा तु मूर्धनि ॥ १५
निक्षिपेत्परमेशानि त्रिधा चाऽऽचम्य तर्पयेत् ।
त्रिधा च प्रोक्षयेद्देहं सूर्यायार्घ्यं निवेदयेत् ॥ १६
मूलमन्त्रेण देवेशि सूर्यमन्त्रेण वा प्रिये ।
शिवबीजं वह्निसंस्थं वामनेत्रविभूषितम् ॥ १७ ॥
बिन्दुनादसमायुक्तं हंसःपदमथोच्चरेत् ।
अनेन मनुना देवि सूर्यायार्घ्यं निवेदयेत् ॥ १८ ॥
यथाशक्त्या जपेन्मन्त्रं गायत्रीं परमेश्वरीम् ।
मूलविद्याद्यमुच्चार्य वागीश्वरि च विद्महे ॥ १९ ॥
द्वितीयं बीजमुच्चार्य कामेश्वरि च धीमहि ।
तृतीयं बीजमुच्चार्य तन्नः शक्तिः प्रचोदयात् ॥ २
यथाशक्त्या जपेत्पश्चाद्यागमण्डपमाविशेत् ।
धातारं च विधातारं गङ्गां च यमुनां तथा ॥ २१
द्वारश्रियं देहलीं च पुरुषं वास्तुसंज्ञकम् ।
संपूज्य परमेशानि पूजयेदासनं बुधः ॥ २२ ॥

---

१ ख. सर्वानन्दम° । २ ख. °दा नित्यं म° । ३ ख. °हा भोगप्र° । ४ ख.
५ ख. मसा । ६ ख. भाव्यते° । ७ ख. वाग्बीजेने° । ८ ख. °हापधे नि° । ९ क
१० ख. ° थो लिखेत् । ११ ख. °पेत्पश्चाद्गाय° । १२ ख. °रमाक्षरीम् ।

पराबीजं समुच्चार्य ततश्चाऽऽधारपूर्वकम् ।
शक्तीतिपदमालिख्य कमलासनमालिखेत् ॥ २३ ॥
ङेन्तं नमःपदं कृत्वा चाऽऽसनस्य मनुः प्रिये ।
उपविश्य ततो देवि भूतान्संत्रासयेद्बुधः ॥ २४ ॥
भूतशुद्धिविधिं कुर्यात्प्राणायामक्रमेण तु ।
वायुबीजं समुच्चार्य षट्कोणादागतं महत् ॥ २५ ॥
कृष्णवर्णं महेशानि शोषयेत्तेन वै तनुम् ।
आसने सम्यगासीनो वामेनाऽऽपूर्य चोदरम् ॥ २६ ॥
कुम्भकेन त्रिरावृत्त्या दक्षिणेन च रेचयेत् ।
कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् ॥ २७ ॥
प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना ।
वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ॥ २८ ॥
ब्रह्महत्या शिरो यस्य स्वर्णस्तेयं भुजद्वयम् ।
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ॥ २९ ॥
*तत्संसर्गिपदद्वंद्वमङ्गप्रत्यङ्गपातकम् ।
उपपातकरोमाणं कृष्णश्मश्रुविलोचनम् ॥ ३० ॥
खड्गचर्मधरं क्रुद्धं कुक्षौ पापं विचिन्तयेत् ।
शोषयेद्वायुबीजेन देहं च परमेश्वरि ॥ ३१ ॥
पापेन सहितं शुष्कं कृत्वा तेन क्रमेण हि ।
वह्निबीजेन संदग्धं पापेन सहितं शिवे ॥ ३२ ॥
पापेन रहितं पश्चात्प्लावयेदमृताम्बुना ।
प्राणप्रतिष्ठामन्त्रेण जीवं देहे निधापयेत् ॥ ३३ ॥
मुखवृत्तं समुच्चार्य हंसस्तु विपरीततः ।
उच्चरेत्परमेशानि विद्येयं त्र्यक्षरी भवत् ॥ ३४ ॥
प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्माणि साधयेत् ।
तेनैव विधिना देवि स्थिरां कुर्यान्निजां तनुम् ॥ ३५ ॥
विशुद्धदेहो देवेशि न्यासं कुर्यात्समाहितः ।
ऋषिरस्य महेशानि दक्षिणामूर्तिरव्ययः ॥ ३६ ॥

---

* इदमर्धं ख. पुस्तके नास्ति.

---

१ ख. °प्राणमङ्गप्रत्यङ्गपातकम् । २ क. °येत्तेन बी° । ३ ख. °तात्मना । ४ क. °कर्मणि । ५ ख. चैव ।

न्यसेच्छिरसि पूज्यत्वात्पङ्क्तिश्छन्दो मुखे प्रिये ।
देवता हृदये बाला त्रिपुरा परमेश्वरी ॥ ३७ ॥
बीजं तु वाग्भवं शक्तिस्तार्तीयं कीलकं तथा ।
कामराजं महेशानि छन्दो न्यास उदाहृतः ॥ ३८ ॥
नाभ्यादिपादपर्यन्तं गलादानाभि चापरम् ।
मूर्धादिगलपर्यन्तं त्र्यक्षरीं विन्यसेत्क्रमात् ॥ ३९ ॥
वामपाणितले चैकं[1] दक्षपाणितले तथा ।
उभयोः संपुटे विद्यां द्विबीजां विन्यसेत्प्रिये[2] ॥ ४० ॥
पञ्च बाणान्क्रमेणैव कराङ्गुलिषु विन्यसेत् ।
अङ्गुष्ठादिकनिष्ठान्तं क्रमेण परमेश्वरि ॥ ४१ ॥
थान्तद्वयं समालिख्य वाह्निसंस्थं क्रमेण हि ।
मुखवृत्तेन नेत्रेण वामेन परिमण्डितम् ॥ ४२ ॥
बाणद्वयमिदं प्रोक्तं मादनं भूमिसंस्थितम् ।
चतुर्थस्वरबिन्द्वाढ्यं नादरूपं वरानने ॥ ४३ ॥
फान्तं क्रमसमायुक्तं वामकर्णविभूषितम् ।
बिन्दुनादसमायुक्तं सर्गवांश्चन्द्रमाः प्रिये ॥ ४४ ॥
पञ्च बाणा[3] महेशानि नामानि शृणु पार्वति ।
क्षोभणद्रावणौ देवि तथा कर्षणसंज्ञकः ॥ ४५ ॥
वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि ।
कामास्तत्रैव विज्ञेयास्तेषां बीजानि[4] संशृणु ॥ ४६ ॥
पराबीजं मध्यबाणं वाग्भवं परमेश्वरि ।
तुर्यबाणं ततश्चैव स्त्रीबीजं च क्रमात्प्रिये ॥ ४७ ॥
पञ्च कामा इमे देवि नामानि शृणु वल्लभे ।
काममन्मथकन्दर्पमकरध्वजसंज्ञकाः ॥ ४८ ॥
मीनकेतुर्महेशानि पञ्चमः परिकीर्तितः ।
एतान्विन्यस्य देवेशि करन्यासं ततः परम् ॥ ४९ ॥
मूलविद्यां द्विरावृत्त्या सर्वाङ्गुलितलेषु च ।
षडङ्गक्रमयोगेण मातृकां विन्यसेत्ततः ॥ ५० ॥

---

१ ख. चैव । २ ख. विद्याबीजानि वि° । ३ ख. बाणा इमे विद्धि ना° । ४ क. शृ° । ५ ख. °णं चतुर्थं स्मात्स्त्री° । ६ क. °मान्महेशानि ना° ।

मातृकां शृणु देवेशि न्यासात्पापनिकृन्तनीम् ।
ऋषिर्ब्रह्माऽस्य मन्त्रस्य गायत्रं छन्द उच्यते ॥ ५१ ॥
देवता मातृका देवि बीजं व्यञ्जनसंचयः ।
शक्तयस्तु स्वरा देवि षडङ्गन्यासमाचरेत् ॥ ५२ ॥
अंआंमध्ये कवर्गं च इंईंमध्ये चवर्गकम् ।
उंऊंमध्ये टवर्गं च एंऐंमध्ये तवर्गकम् ॥ ५३ ॥
ओंऔंमध्ये पवर्गं च क्रमेण परमेश्वरि ।
अनुस्वारविसर्गान्ते यशवर्गौ सलक्षकौ ॥ ५४ ॥
हृदयं च शिरो देवि शिखां च कवचं ततः ।
नेत्रमस्त्रं न्यसेन्ङेन्तं नमःस्वाहाक्रमेण तु ॥ ५५ ॥
वषड्हुंवौषडन्तं च फडन्तं योजयेत्प्रिये ।
षडङ्गोऽयं मातृकायाः सर्वपापहरः स्मृतः ॥ ५६ ॥
षोडशपत्राम्बुजे कण्ठे स्वरान्षोडश विन्यसेत् ।
द्वादशच्छदहृत्पद्मे कादीन्द्वादश विन्यसेत् ॥ ५७ ॥
दशपत्राम्बुजे नाभौ डकारादीन्न्यसेद्दश ।
षट्पत्रे लिङ्गसंस्थे च बकारादीन्न्यसेच्च षट् ॥ ५८ ॥
आधारे चतुरो वर्णान्न्यसेद्वादींश्चतुर्दले ।
हक्षौ भ्रूमध्यगे पद्मे द्विदले विन्यसेत्प्रिये ॥ ५९ ॥
इत्यन्तर्मातृकां न्यस्य सर्वाङ्गन्यासमाचरेत् ।
मूर्धनि मुखवृत्ते च नेत्रकर्णेषु पार्वति ॥ ६० ॥
नासागण्डोष्ठदन्तेषु मूर्धास्येषु च विन्यसेत् ।
पाणिपादयुगस्यान्ते संध्यग्रेषु क्रमात्प्रिये ॥ ६१ ॥
पार्श्वद्वये पृष्ठनाभिजठरेषु क्रमान्न्यसेत् ।
यादीन्सधातुकान्देवि क्रमेणैव ततो न्यसेत् ॥ ६२ ॥
त्वगसृग्मांसमेदोस्थिमज्जाशुक्राणि धातवः ।
प्राणात्मा चैव जीवात्मा परमात्मा च विन्यसेत् ॥ ६३ ॥
हृदये बाहुमूले च तथाऽपरगले प्रिये ।
कक्षयोर्हृदयप्रान्ते पाणिपादयुगे तथा ॥ ६४ ॥
जठराननयोर्देवि व्यापकं च क्रमान्न्यसेत् ।
पञ्चाशद्वर्णरूपां च कन्दर्पशशिभूषणाम् ॥ ६५ ॥

---

१ ख. सलाम् । २ ख. °ले । हंक्षौ । ३ ख. °मान्न्यसेत् । ४ ख. °रमानं जी° । ५ ख. °रमानं तथा च क्रमतो न्य° ।

शुद्धस्फटिकसंकाशां शुद्धक्षौमविराजिताम् ।
मुक्तावज्रस्फुरद्भूषां जपमालां कमण्डलुम् ॥ ६६ ॥
पुस्तकं वरदानं च बिभ्रतीं परमेश्वरीम् ।
एवं ध्यात्वा न्यसेत्पश्चाद्विद्यान्यासं सुरेश्वरि ॥ ६७
कुर्वीत देहसंन्नाहं त्रिभिर्बीजैः क्रमात्प्रिये ।
करयोर्विन्यसेदादौ मणिबन्धे तले नखे ॥ ६८ ॥
दक्षे वामे च विन्यस्य कक्षकर्पूरपाणिषु ।
पुनर्दक्षे च वामे च पादयोश्च तथा न्यसेत् ॥ ६९
नादान्ते हृदये लिङ्गे न्यसेद्देवि ततः परम् ।
एतेष्वङ्गेषु देवेशि संहारक्रमतो न्यसेत् ॥ ७० ॥
विद्यां सृष्टिक्रमेणैव जानीहि परमेश्वरि ।
ततो न्यसेन्महादेवि नवयोन्यङ्किताभिधम् ॥ ७१ ॥
कर्णयोश्चुबुके भूयः शङ्खयोर्मुखमण्डले ।
नेत्रयोर्नासिकायां च बाहुयुग्मे हृदि प्रिये ॥ ७२ ॥
तथा कूर्परयोर्नाभौ जान्वोरन्धुनि विन्यसेत् ।
पादयोर्देवि गुह्ये च पार्श्वयोर्हृत्स्तनद्वये ॥ ७३ ॥
कण्ठे च नवयोन्याख्यं न्यसेद्बीजत्रयात्मकम् ।
षडङ्गमाचरेद्देवि द्विरावृत्त्या क्रमेण तु ॥ ७४ ॥
त्रिद्व्येकदशकंत्रिद्विसंख्यया शैलसंभवे ।
अङ्गुलीनां पुनर्देवि बाणान्कामांश्च विन्यसेत् ॥ ७
ललाटगलहृन्नाभिमूलाधारेषु वै क्रमात् ।
मूलेन व्यापकं कृत्वा प्राणायामं समाचरेत् ॥ ७६

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे बालान्यासविधिर्नाम
द्वितीयः पटलः ॥ २ ॥

---

अथ तृतीयः पटलः ।

---

ईश्वर उवाच—

एवं विन्यस्तदेहः सन्समाहितमनास्ततः ।
अन्तर्यागविधिं कुर्यात्साक्षाद्ब्रह्ममयं प्रिये ॥ १ ॥

---

१ क. °सेद्देवि पश्चा° । २ क. °धा सु° । ३ क. तलात्मके । ४ ख. कद्वित्रिस° सन्यस्तदे° ।

मूलाधारे मूलविद्यां विद्युत्कोटिसमप्रभाम् ।
सूर्यकोटिप्रतीकाशां चन्द्रकोटिद्रवां प्रिये ॥ २ ॥
बिसतन्तुस्वरूपां तां बिन्दुत्रिवलयां प्रिये ।
ऊर्ध्वशक्तिनिपातेन सहजेन वरानने ॥ ३ ॥
मूलशक्तिदृढत्वेन मध्य[1]बीजप्रबोधतः ।
परमानन्दसंदोहसानन्दं चिन्तयेत्पराम् ॥ ४ ॥
इत्यन्तर्यजनं कृत्वा बाह्यपूजां समाचरेत् ।
तत्र प्राङ्मुख आसीनश्चक्रोद्धारं समाचरेत्[2] ॥ ५ ॥
सुस्थले श्रीभवे पट्टे लिखेद्यन्त्रमनुत्तमम् ।
ईशानादग्निपर्यन्तमृजुरेखां समालिखेत् ॥ ६ ॥
ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ।
एकीकृत्य च वारुण्यां शक्तिरेखा परा प्रिये ॥ ७ ॥
त्रिकोणाकाररूपेयं [3]तस्या उपरि संलिखेत् ।
त्रिकोणाकाररूपा[4]त्तु शक्तिद्वयमुदाहृतम् ॥ ८ ॥
पूर्वशक्त्यग्रभागे तु मानयष्टिवदालिखेत् ।
रेखां तु परमेशानि वायुराक्षसकोणगाम् ॥ ९ ॥
संधिभेदक्रमेणैव तयोः शक्त्योस्ततः परम् ।
रेखे आकृष्य कोणाभ्यां तदग्रात्पूर्वगे कुरु ॥ १० ॥
वह्निमण्डलमेतत्तु पूर्वाग्रं वीरवन्दिते ।
एकेन वह्निना शक्तिद्वयेनैतद्भवेत्प्रिये ॥ ११ ॥
नवयोनिविशोभाढ्यं चक्रराजमिदं प्रिये ।
सर्वसौभाग्यजनकं सर्वैश्वर्यप्रदायकम् ॥ १२ ॥
सर्वसिद्धिप्रदं रोगहरणं धनदायकम् ।
एतद्बाह्ये तु संलेख्यं वृत्तं पूर्णेन्दुसंनिभम् ॥ १३ ॥
तल्लग्नमष्टपत्रं च ग्रन्थिभिश्चाष्टभिर्युतम् ।
ग्रन्थयः प्रणवाभ्यां च संपुटत्वेन कारयेत् ॥ १४ ॥
ग्रन्थयः कुलिशा ज्ञेयाः प्रणवैरेव सुव्रते ।
त्रिशूलाष्टकमालिख्य चतुरस्रं लिखेत्प्रिये ॥ १५ ॥

---

१ ख. °ध्यशक्तिप्र° । २ ख. °त् । श्रीखण्डसंभवे पट्टे स्थापयेद्यन्त्रमुत्त° । ३ ख. तस्योपरि च सं° । ४ ख. °रूपं तु श° ।

चतुर्द्वारविशोभाढ्यं सर्वानन्दकरं तथा ।
हसौःकारं त्रिकोणान्तः संलिख्य वरवर्णिनि ॥ १६
कामबीजं मध्यमं यदष्टकोणेषु संलिखेत् ।
स्वरान्षोडश देवेशि युग्मयुग्मप्रभेदतः ॥ १७ ॥
दलाष्टकेषु संलिख्य पश्चिमादिप्रदक्षिणम् ।
ग्रन्थिस्थानेषु[1] वर्गाणां कादीनां परमेश्वरि ॥ १८ ॥
विलिखेत्सप्तसंख्यानामाद्यार्णं क्रमतः प्रिये ।
क्षकारमष्टमे योज्यं शेषान्वर्णान्क्रमेण तु ॥ १९ ॥
त्रिशूलाग्रेषु संलिख्य पश्चिमादिक्रमेण तु ।
तद्बाह्ये मातृकावृत्तं विलिख्य परमेश्वरि ॥ २० ॥
चतुरस्रे महेशानि मातृकां कामगर्भिताम् ।
विलिख्य पूजयेद्यन्त्रं हेमरौप्यादिपट्टके ॥ २१ ॥
ताम्रे वा दर्पणे ताले काश्मीरप्रभवेऽपि वा[3] ।
चन्दनाद्यन्विते भूमौ कुङ्कुमेनाथ[4] वा पुनः ॥ २२ ॥
सिन्दूररजसा वाऽपि कस्तूरीघुसृणेन्दुभिः ।
भूर्जे गोरोचनाद्रव्यैः कल्पितं मानसेऽथ वा ॥ २३
सुवर्णरत्नलेखिन्या सर्वकार्यार्थसाधकः[5] ।
विलिख्य यन्त्रं देवेशि पूजाद्रव्यैः प्रपूजयेत् ॥ २४ ॥
कुलागमक्रमेणैव ध्यात्वा ब्रह्मविकाशिनीम् ।
मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ॥ २५ ॥
*उद्यदादित्यरुचिरां स्मरेदशुभशान्तये ।
भ्रमद्भ्रमरनीलाभधम्मिल्लामलपुष्पिणीम् ॥ २६ ॥
ब्रह्मरन्ध्रस्फुरद्भृङ्गमुक्तारेखाविराजिताम् ।
मुक्तारेखालसद्रत्नतिलकां मुकुटोज्ज्वलाम् ॥ २७ ॥
विशुद्धमुक्तारत्नाढ्यां चन्द्ररेखाकिरीटिनीम् ।
भ्रमद्भ्रमरनीलाभनयनत्रयराजिनीम् ॥ २८ ॥
सूर्यभास्वन्महारत्नकुण्डलालंकृतां पराम् ।
शुक्राकारस्फुरन्मुक्ताहारभूषणभूषिताम् ॥ २९ ॥

---

* इदमर्धं ख. पुस्तके नास्ति ।

---

१ ख. ग्रन्थि स्था° । २ क. स्थाने । ३ ख. वा । चारुपीठेऽथ वा भू° । ४ ख. कुङ्कुमद्रवैः । ५ ख. °धकम् । वि° ।

ग्रैवेयाङ्गदमुक्ताभिः स्फुरत्कान्तिविराजिताम् ।
गङ्गातरङ्गकर्पूरशुभ्राम्बरविराजिताम् ॥ ३० ॥
श्रीखण्डवल्लीसदृशबाहुवल्लीविराजिताम् ।
कङ्कणादिलसद्भूषां मणिबन्धलसत्प्रभाम् ॥ ३१ ॥
प्रवालपल्लवाकारपाणिपल्लवराजिताम् ।
वज्रवैदूर्यमुक्तालिमेखलां विमलप्रभाम् ॥ ३२ ॥
रक्तोत्पलदलाकारपादपल्लवभूषिताम् ।
नक्षत्रमालासंकाशमुक्तामञ्जीरमण्डिताम् ॥ ३३ ॥
वामेन पाणिनैकेन पुस्तकं चापरेण तु ।
अभयं च प्रयच्छन्तीं साधकाय वरानने ॥ ३४ ॥
अक्षमालां च वरदं दक्षपाणिद्वयेन हि ।
दधतीं चिन्तयेद्देवीं वश्यसौभाग्यवाक्प्रदाम् ॥ ३५ ॥
क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मरेत्प्रिये ॥ ३६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरेश्वरीध्यानं नाम तृतीयः पटलः ॥ ३ ॥

---

अथ चतुर्थः पटलः ।

---

श्रीदेव्युवाच—

चक्रमण्डलमाख्यातं न पूजा तत्र मण्डले ।
कथिता परमेशान श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि पूजामण्डलमुत्तमम् ।
पीठपूजां विधायाऽऽदौ रविदेवीविराजिताम् ॥ २ ॥
वामा ज्येष्ठा च रौद्री च अम्बिकेच्छा ततः परम् ।
ज्ञाना क्रिया कुब्जिका च ऋद्धिश्चैव विषघ्निका ॥ ३ ॥
दूतरी चैव आनन्दा देवि द्वादश शक्तयः ।
मुक्ताफलामलमणिस्फुरच्छत्रं शशिप्रभम् ॥ ४ ॥
गङ्गातरङ्गधवलं चामरद्वयमद्रिजे ।
नवरत्नस्फुरद्दीप्ति ताम्बूलस्य करण्डकम् ॥ ५ ॥

---

१ ख. °दपत्रालिस्फु° । २ क. °न्तिजितामृता° । ३ ख. °न्धमणिप्र° । ४ ख. °येरत्नाङ्कि° । ५ ख. °शमञ्जुम° । ६ ख. °विवेदवि° ।

मल्लिकामालतीजातीशतपत्रादिदामभिः[1] ।
पूर्णं रत्नमयं भाण्डं तथाऽलंकारपूरिताम् ॥ ६ ॥
पेटिकां व्यजनद्वंद्वं नवरत्नाभिभूषितम् ।
नीलकण्ठस्य पिच्छैस्तु तथोशीरविराजितम् ॥ ७ ॥
कर्पूरमृगनाभ्याढ्यं कुङ्कुमक्षोदमण्डितम् ।
चषकं स्वर्णरचितं कङ्कतीं हीरराजिताम् ॥ ८ ॥
कज्जलस्य शलाकां च करण्डं चन्द्रपूरितम् ।
दधानाः परमेशानि शक्तयः पीठसंस्थिताः ॥ ९ ॥
पूर्वादिपरितः पूज्या रविसंख्या वरानने ।
संपूज्य मध्ये देवेशि प्रेतसिंहासनं यजेत् ॥ १० ॥
रत्नस्वर्णाकृति[3] स्फारं दीप्तिमच्छुद्धमव्ययम् ।
पञ्चप्रेतासनं साक्षान्मोक्षदायि न संशयः ॥ ११ ॥

श्रीदेव्युवाच—

पञ्च प्रेतान्महेशान ब्रूहि तेषां तु कारणम् ।
निर्जीवा अविनाशास्ते नित्यरूपाः कथं विभो ॥ १
निर्जीवे नाश एवास्ति ते कथं नित्यतां गताः ।

ईश्वर उवाच—

साधु पृष्टं त्वया भद्रे पञ्चप्रेतमयं कथम् ॥ १३ ॥
ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।
पञ्च प्रेता वरारोहे निश्चला एव सर्वदा ॥ १४ ॥
ब्रह्मणः परमेशानि मातृत्वं सृष्टिरूपकम् ।
वामाशक्तेस्तु विज्ञेयं ब्रह्मा प्रेतो न संशयः ॥ १५ ॥
शिवस्य करणं नास्ति शक्तेस्तु करणं सदा ।
ब्रह्माण्डलक्षनिर्माणं जायते शक्तितः प्रिये ॥ १६
अत एव महेशानि ब्रह्मा प्रेतो न संशयः ।
विष्णौ च पालनं नास्ति पालयन्ती परा शिवा ।
ज्येष्ठाभिधा महेशानि[4] सैव विष्णुरितीरिता ।
विष्णुस्तु निश्चलो देवि वैष्णवी व्याप्तिकारिणी ॥
*पालयन्ती जगत्सर्वं विश्वनाटककारिणी ॥ १८ ॥

---

* इदमर्धं ख. पुस्तके ।

---

१ ख. °दिकैः शुभैः । २ क. °पूर्णस° । ३ क. °र्णादिभिः स्फा° । ४ ख. °नि कर्तृत
°नि विष्णुशक्तिरि° ।

अत एव महेशानि विष्णुः प्रेतो न संशयः ।
रुद्रस्तु परमं तत्त्वं शि[1]वो निश्चल एव हि ॥ १९ ॥
ग्रसन्ती रुद्रशक्तिस्तु तमोरूपा वरानने ।
गुणत्रयं शिवे नास्ति गुणातीतः परेश्वरः ॥ २० ॥
निर्गुणस्य कथं ग्रासो निश्चलस्य वरानने ।
ग्रसन्ती रुद्रशक्तिस्तु त्रैलोक्यं सचराचरम् ॥ २१ ॥
ब्रह्मा विष्णुश्च रुद्रश्च गुणातीताः सदा प्रिये ।
सगुणाः परमेशानि सृष्टिस्थितिलयात्मकाः ॥ २२ ॥
ईश्वरोऽपि वरारोहे महाप्रेतः सदाऽनघे ।
शिवे निश्चलता कस्मादीश्वरत्[2]वं भवेत्प्रिये ॥ २३ ॥
यः कर्ता च स्वयं हर्ता स ईशो नान्यथा भवेत् ।
कर्तृहर्तृत्वयुगुलं निश्चले न हि सुन्दरि ॥ २४ ॥
ईश्वरत्वं शिवायां तु न शिवे परमेश्वरि ।
अत एव महाप्रेत ईश्वरो नान्यथा भवेत् ॥ २५ ॥
सदाशिवो महाप्रेतः केवलं नि[3]श्चलः प्रिये ।
अव्यक्तः परमानन्दो ब्रह्मानन्दम[4]यी शिवा[5] ॥ २६ ॥
शक्त्या विना शिवे दे[6]वि वासना न प्रवर्तते ।
अत एव महेशानि महाप्रेतासनं य[7]जेत् ॥ २७ ॥
चक्रमध्ये स्थितं बीजं सदाशिवमहापदम् ।
प्रेतपद्मासनं ङेन्तं हृन्मनुर्मनुरीरित[8]ः ॥ २८ ॥
महासनस्य मन्त्रोऽयं कलार्णः परमेश्वरि ।
सिंहासनं समभ्यर्च्य ततश्चाऽऽवाहनं कुरु ॥ २९ ॥
वहन्नाडीक्रमेणैव मूलादिब्रह्मरन्ध्रगाम् ।
संवित्कलां परेशानि सर्वज्ञां कुलसुन्दरीम् ॥ ३० ॥
आवाह्य चक्रमध्ये तु तर्पयेत्कुलसुन्दरीम् ।
आवाहनादिमुद्रास्तु कथयामि तवानघे ॥ ३१ ॥
ऊर्ध्वा[9]ञ्जलिमधः कुर्यादियमावाहनी भवेत् ।
इयं तु विपरीता स्यात्तदा वै स्थापनी मता ॥ ३२ ॥

---

१ ख. शिवे नि° । २ ख. °त्वं प्रपेदिरे । ३ ख. निर्मलं भवेत् । अ° । ४ ख. °मयः शिवे श° । ५ क. शिवा । ६ ख. °वि न किंचिदपि व° । ७ ख. भवेत् । ८ ख. °तः । महाप्रेतस्य म° । ९ क. °र्ध्वाङ्गुलि° ।

मिलितं मुष्टियुगुलं संनिधापनरूपिणी ।
अन्तरङ्गुष्ठमुष्टिभ्यां संनिरोधनरूपिणी ॥ ३३ ॥
एतस्या एव मुद्रायास्तर्जन्यौ सरले यदा[2] ।
सव्यापसव्यभ्रमणान्मुद्रेयमवगुण्ठनी ॥ ३४ ॥
अङ्गमन्त्रैर्न्यसेद्देवि देव्यङ्गे साधकोत्तमः ।
संकलीकरणं नाम मुद्रेयं व्याप्तिकारिणी ॥ ३५ ॥
करावेकत्र संयोज्या[3]वङ्गुष्ठौ बन्धयेत्प्रिये ।
परमीकरणं नाम मुद्रेयं तु ततः परम् ॥ ३६ ॥
परिवर्त्य करौ पश्चात्तर्जनीमध्यमायुगम् ।
कनिष्ठानामिकायुग्मं परस्परयुतं कुरु ॥ ३७ ॥
धेनुमुद्रेयमाख्याता अमृतीकरणं भवेत् ।
एताः साधारणा मुद्रा दर्शयित्वा ततः परम् ॥ ३८
वरदाभयमुद्रे च वरदाभयवत्प्रिये ।
पुस्तकवद्वामकरं कुर्यात्समतलं प्रिये ॥ ३९ ॥
पुस्तकं नाम मुद्रेयं वाग्विलासं प्रयच्छति ।
तर्जन्यङ्गुष्ठयोगे तु दक्षहस्ते तु पार्वति ॥ ४० ॥
अक्षमालेति मुद्रेयं ज्ञानमुद्रा च वै भवेत् ।
मुष्टिं बध्वा दक्षकरे तर्जन्यङ्कुशरूपिणी ॥ ४१ ॥
अङ्कुशाख्या महामुद्रा त्रैलोक्याकर्षिणी भवेत् ।
तर्जनीयुगुलं देवि वामांसे शृङ्खलाकृति ॥ ४२ ॥
पाशमुद्रा समाख्याता त्रैलोक्याकर्षणक्षमा ।
यथा हस्तगतं चापं तथा हस्तं कुरु प्रिये ॥ ४३ ॥
चापमुद्रेयमाख्याता वामहस्ते व्यवस्थिता ।
यथा हस्तगतो बाणस्तथा हस्तं कुरु प्रिये ॥ ४४ ॥
बाणमुद्रेयमाख्याता रिपुवर्गनिकृन्तनी ।
वामहस्ततलं देवि कपालाकृति कारयेत् ॥ ४५ ॥
कपालमुद्रा देवेशि देव्यानन्दकरी सदा ।
हस्ताभ्यां कमलाकारो यदा तत्कमलं भवेत् ॥ ४६ ॥

---

१ क. ङ्गुलमु° । २ ख. °दा । अवगुण्ठनमुद्रेयं परितो भ्रमतो यदा । ३ °
°योज्य [illegible]

एषा कमलमुद्रा च लक्ष्मीवृद्धिकरी मता ।
इति चाऽऽयुधमुद्रास्तु दर्शयित्वा वरानने ॥ ४७ ॥
गन्धपुष्पाक्षतादीनि दद्यात्स्त्रीसहितः सदा ।
उपचारैरलंकारैस्तोषयेत्परमेश्वरीम् ॥ ४८ ॥
लयाङ्गं कल्पयेद्देहे सम्यक्संतर्पयेच्छिवाम् ।
परिवारार्चनं पश्चादादावङ्गाकृतिं प्रिये ॥ ४९ ॥
गुरुपूजानन्तरं तु प्रथमं गुरुमर्चयेत् ।
प्राग्योनिमध्ययोन्योस्तु मध्ये निजगुरुं यजेत् ॥ ५० ॥
विशेषमुद्रां देवेशि दर्शयेत्सर्वसिद्धये ।
परिवर्त्य करौ सम्यक्तर्जनीवाहनी समे ॥ ५१ ॥
मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् ।
अन्योन्यानामिके देवि कनिष्ठे तु यथास्थिते ॥ ५२ ॥
अङ्गुष्ठाभ्यां योजिताभ्यां योन्याकारं तु कल्पयेत् ।
योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ ५३ ॥
इयमेव हृदि क्षिप्ता त्रैलोक्यक्षोभिणी भवेत् ।
त्रैलोक्यद्राविणी नाम मुखस्था परमेश्वरि ॥ ५४ ॥
भ्रूमध्यस्था महादेवि त्रैलोक्याकर्षिणी भवेत् ।
ललाटस्था महादेवि त्रैलोक्यवशकारिणी ॥ ५५ ॥
ब्रह्मरन्ध्रस्थिता देवि त्रैलोक्योन्मादकारिणी ।
पञ्चमुद्रामयीं मुद्रां योनिमुद्रां च दर्शयेत् ॥ ५६ ॥
ततः षडङ्गावरणं परितः पीठमद्रिजे ।
अग्नीशासुरवायव्यमध्ये दिक्षु च पूजयेत् ॥ ५७ ॥
अग्रकोणे रतिं यष्ट्वा प्रीतिमुत्तरकोणके ।
मनोभवां दक्षकोणे ततो बाणान्समर्चयेत् ॥ ५८ ॥
उत्तरस्यां द्वयं देवि दक्षिणस्यां दिशि द्वयम् ।
अग्रे चैकं क्रमेणैव बाणान्पश्चाद्द्रिजे यजेत् ॥ ५९ ॥
पञ्च कामांस्तथा देवि बाणवत्परिपूजयेत् ।
अनङ्गकुसुमां देवि तथाऽनङ्गादिमेखलाम् ॥ ६० ॥

---

१ क. गुरुं पूज्यान° । २ ख. °र्जन्यौ वामने स° । ३ ख. °वि सर्वाल्हादकरी मता । प° ।
४ ख. °द्रां प्रद° ।

अनङ्गमदनां पश्चादनङ्गमदनातुराम् ।
सुभगां पञ्चमीं देवि भगां च भगसर्पिणीम् ॥ ६१
भगमालां महादेवि पूर्वादिक्रमतो यजेत् ।
अष्टयोनिषु देवेशि ततो ब्राह्म्यादिका यजेत् ॥ ६२
युग्मयुग्मप्रभेदेन वसुपत्रे वरानने ।
असिताङ्गं तथा ब्राह्मीं रुरुं माहेश्वरीं प्रिये ॥ ६३
चण्डं कौमारिकां चैव क्रोधं वैष्णवदेवताम् ।
उन्मत्तं चैव वाराहीं माहेन्द्रीं च कपालिनम् ॥ ६४
भीषणं चैव चामुण्डां संहारं चाष्टमं यजेत् ।
महालक्ष्मीं महादेवि युग्मानि परिपूजयेत् ॥ ६५ ॥
पश्चिमादिक्रमेणैव ततः पीठाष्टकं[1] यजेत् ।
कामरूपं च मलयं ततः कौलगिरिं तथा ॥ ६६ ॥
कुलान्तकं च[2] चोहारं जालंधरमतः परम्[3] ।
उड्डीयानं देवकूटं पीठाष्टकमिदं क्रमात् ॥ ६७ ॥
ग्रन्थिस्थानेषु संपूज्यं पश्चिमादिक्रमेण तु ।
त्रिशूलं परितो देवि मातृकावृत्तमण्डले ॥ ६८ ॥
भैरवा दश संपूज्याः पश्चिमादिक्रमात्प्रिये ।
हेतुकं चैव वेतालं तन्मध्ये त्रिपुरान्तकम् ॥ ६९ ॥
अग्निजिह्वं च कालान्तं तथा चैव कपालिनम् ।
एकपादं भीमरूपं[4] मलयं हाटकेश्वरम् ॥ ७० ॥
दशाभ्यर्च्य महादेवि भैरवान्मातृमण्डले ।
चतुरस्रे महेशानि लोकपालाष्टकं यजेत् ॥ ७१ ॥
इन्द्रमग्निं यमं देवि राक्षसं वरुणं तथा ।
वायुं कुबेरमीशानं पूर्वादिक्रमतो यजेत् ॥ ७२ ॥
ब्रह्माणं चैव विष्णुं च ऊर्ध्वाधः क्रमतो यजेत्[5] ।
वांकारं पूर्वमुच्चार्य बटुकाय नमो लिखेत् ॥ ७३ ॥
यांकारं बीजमुच्चार्य योगिनीभ्यो नमस्तथा ।
क्षांकारं बीजमुच्चार्य क्षेत्रपालाय वै नमः[6] ॥ ७४ ॥
गांकारं बीजमुच्चार्य ततो गणपतिं लिखेत्[7] ।
ङेन्तं नमः पश्चिमादिदिक्षु पूज्याः क्रमेण तु ॥ ७५

१ ख. °ठार्चनं य° । २ ख. च चोहा° । ३ ख. °म् । ओडिया° । ४ ख. °रूपमच
५ ख° त् । ब्लौंकारं बीजमु° । ६ ख. °मः । गंका° । ७ ख. यजेत् ।

पूजां विधाय देवेशीमुपचारैः प्रपूजयेत् ।
उत्तराभिमुखो भूत्वा यदा चक्रं प्रपूजयेत् ॥ ७८ ॥
उत्तराशा तदा देवि पूर्वाशैव व्यवस्थिता ।
पश्चिमाशामुखो देवि यदा चक्रं प्रपूजयेत् ॥ ७९ ॥
पश्चिमाशा तदा देवि पूर्वाशैव व्यवस्थिता ।
दक्षिणाशामुखो देवि यदा चक्रं प्रपूजयेत् ॥ ८० ॥
दक्षिणाशा ततो देवि पूर्वाशैव न संशयः ॥ ८१ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरेश्वरीपूजाक्रमविधिर्नाम चतुर्थः पटलः ॥ ४ ॥

---

## अथ पञ्चमः पटलः ।

---

श्रीदेव्युवाच—

कुमारीक्रम आख्यातो मुद्रासनसमन्वितः ।
इदानीं श्रोतुमिच्छामि बलिदानादिकं विभो ॥ १ ॥

ईश्वर उवाच—

धूपं विस्तारयेत्सम्यङ्मूलमन्त्रं हृदि स्मरन् ।
वनस्पतिरसोत्पन्नो गन्धाढ्यो धूप उत्तमः ॥ २ ॥
आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ।
अनेन मनुना देवि देव्यै धूपं निवेदयेत् ॥ ३ ॥
सुप्रकाशो महादीपः सर्वत्रातिमिरापहः ।
सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम् ॥ ४ ॥
तथैव दीपमन्त्रोऽयं विद्यान्ते परमेश्वरि ।
आरात्रिकं ततः कुर्यात्सर्वकार्यार्थसिद्धये ॥ ५ ॥
सौवर्णे राजते कांस्ये स्थालके परमेश्वरि ।
कुङ्कुमेन लिखेत्पद्मं वसुपत्रं मनोहरम् ॥ ६ ॥

---

१ ख. °रैः । पुनर्यजेत् । २ क. °क्रं समुद्धरेत् ।

चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे ।
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्ट दीपकान् ॥ ७ ॥
यवगोधूममुद्गादिरचिताञ्शर्करायुतान् ॥
चषकान्वितमुद्राभिः शोभितान्घृतपूरितान् ॥ ८
अभिमन्त्र्य महेशानि रत्नेश्वर्या ततः परम् ।
श्रीबीजं च पराबीजं संलिख्य वरवर्णिनि ॥ ९ ॥
गसौ च मपनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ।
वामकर्णसमायुक्ता बिन्दुनादविभूषिताः ॥ १० ॥
बीजपञ्चकमेतत्तु पञ्च रत्नानि सुन्दरि ।
पूर्वबीजे विलोमेन रत्नेशीयं नवाक्षरी ॥ ११ ॥
मूलमन्त्रेण चाभ्यर्च्य ततश्चाऽऽरात्रिकं चरेत् ।
स्थालकं तु समुद्धृत्य मस्तकान्तं पुनःपुनः ॥ १२
नववारं महेशानि ततो नीराजनं चरेत् ।
समस्तचक्रचक्रेशीयुते देवि नवात्मिके ॥ १३ ॥
आरात्रिकमिदं देवि गृहाण मम सिद्धये ।
नीराजनमनुर्देवि विद्यान्ते प्रकटीकृतः ॥ १४ ॥
आरात्रिके महेशानि चक्रमुद्रा व्यवस्थिता ॥
वामहस्ताङ्गुष्ठगर्भे कनिष्ठां दक्षिणां नयेत् ॥ १५ ॥
कनिष्ठागर्भगे बामे दक्षाङ्गुष्ठं विनिक्षिपेत् ।
अन्योन्यकरयोर्देवि चक्रमुद्रेयमीरिता ॥ १६ ॥
आरात्रिकविधिं कृत्वा नैवद्यं तु निवेदयेत् ।
शुद्धस्फटिकसंकाशश्चन्द्ररश्मिसमप्रभः ॥ १७ ॥
लसत्तण्डुलजो देवि चारुमुद्गोदनः प्रिये ।
हिङ्गुजीरमरीचाद्यैरार्द्रकै रुचिरः प्रिये ॥ १८ ॥
वटकः कुङ्कुमाकारः पायसं हेमसंनिभम् ।
दुग्धगम्भीरसुभगं शर्करापूरपूरितम् ॥ १९ ॥
कपिलाघृतसंयुक्तं भूर्जत्वङ्खण्डकाः प्रिये ।
शर्करालोलिता देवि सूपं मुद्गोद्भवं तथा ॥ २० ॥
नानाविधानि पेयानि व्यञ्जनानि बहूनि च ।
इत्याद्यन्नरसोपेतं नैवेद्यं कल्पयेद्बुधः ॥ २१ ॥

---

१ ख. °ष्ठयोगतो दे° । २ क. °कै रचितः प्रि° ।

मनःकल्पितरूपं वा त्रिपुरायै निवेदयेत् ।
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥ २२ ॥
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।
विद्यान्ते परमेशानि नैवेद्यमनुरीरितः ॥ २३ ॥
परिषिच्य ततो देवि नित्यहोमं समाचरेत् ।
मूलमन्त्रेण देवेशि हुनेत्पञ्चाऽऽहुतीः क्रमात् ॥ २४ ॥
प्राणापानौ तथा व्यान उदानश्च समानकः ।
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम् ॥ २५ ॥
षडाहुतीः षडङ्गेन नित्यहोमोऽयमीरितः ।
नित्यहोमविधिं कृत्वा बलिदानविधिं चरेत् ॥ २६ ॥
ईशाने च तथाऽऽग्नेये नैर्ऋत्ये च तथा प्रिये ।
वायव्ये क्रमतो देवि मण्डलानां चतुष्टयम् ॥ २७ ॥
श्रीचक्रमभितो देवि त्रिकोणं व्योम चाऽऽलिखेत् ।
पूर्वमन्त्रैः समभ्यर्च्य बटुकादिभिरद्रिजे ॥ २८ ॥
एह्येहि देवि पुत्रान्ते बटुकान्तेऽथ नाथ च ।
कपिलान्ते जटाभार भासुरान्ते त्रिनेत्र च ॥ २९ ॥
ज्वालामुख च सर्वान्ते विघ्नान्नाशय नाशय ।
सर्वोपचारसहितं बलिं गृह्ण द्विधापदम् ॥ ३० ॥
वह्निजायान्वितो मन्त्रो बटुकस्य उदाहृतः ।
अनेन विधिना देवि बटुकस्य बलिं प्रिये ॥ ३१ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥३२॥

एतदन्ते महेशानि यांबीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ ३३ ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीनां बलिं हरेत् ॥ ३४ ॥
षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत्प्रिये ।
स्थानक्षेत्रपदं पालधूपदीपादि चाऽऽलिखेत् ॥ ३५ ॥
सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥ ३६ ॥

चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे ।
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्ट दीपकान् ॥ ७ ॥
यवगोधूममुद्गादिरचिताञ्शर्करायुतान् ॥
चषकान्वितमुद्राभिः शोभितान्घृतपूरितान् ॥ ८ ॥
अभिमन्त्र्य महेशानि रत्नेश्वर्या ततः परम् ।
श्रीबीजं च पराबीजं संलिख्य वरवर्णिनि ॥ ९ ॥
गसौ च मपनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ।
वामकर्णसमायुक्ता बिन्दुनादविभूषिताः ॥ १० ॥
बीजपञ्चकमेतत्तु पञ्च रत्नानि सुन्दरि ।
पूर्वबीजे विलोमेन रत्नेशीयं नवाक्षरी ॥ ११ ॥
मूलमन्त्रेण चाभ्यर्च्य ततश्चाऽऽरात्रिकं चरेत् ।
स्थालकं तु समुद्धृत्य मस्तकान्तं पुनःपुनः ॥ १२ ॥
नववारं महेशानि ततो नीराजनं चरेत् ।
समस्तचक्रचक्रेशीयुते देवि नवात्मिके ॥ १३ ॥
आरात्रिकमिदं देवि गृहाण मम सिद्धये ।
नीराजनमनुर्देवि विद्यान्ते प्रकटीकृतः ॥ १४ ॥
आरात्रिके महेशानि चक्रमुद्रा व्यवस्थिता ॥
वामहस्ताङ्गुष्ठगर्भे कनिष्ठां दक्षिणां नयेत् ॥ १५ ॥
कनिष्ठागर्भगे वामे दक्षाङ्गुष्ठं विनिक्षिपेत् ।
अन्योन्यकरयोर्देवि[1] चक्रमुद्रेयमीरिता ॥ १६ ॥
आरात्रिकविधिं कृत्वा नैवेद्यं तु निवेदयेत् ।
शुद्धस्फटिकसंकाशश्चन्द्ररश्मिसमप्रभः ॥ १७ ॥
लसत्तण्डुलजो देवि चारुमुद्गोदनः प्रिये ।
हिङ्गुजीरमरीचाद्यैरार्द्रके रुचिरः[2] प्रिये ॥ १८ ॥
वटकः कुङ्कुमाकारः पायसं हेमसंनिभम् ।
दुग्धगम्भीरसुभगं शर्करापूरपूरितम् ॥ १९ ॥
कपिलाघृतसंयुक्तं भूर्जत्वङ्मण्डकाः प्रिये ।
शर्करालोलिता देवि सूपं मुद्गोद्भवं तथा ॥ २० ॥
नानाविधानि पेयानि व्यञ्जनानि बहूनि च ।
इत्याद्यन्नरसोपेतं नैवेद्यं कल्पयेद्बुधः ॥ २१ ॥

१ ख. °न्ययोगतो दे° । २ क. °के रचितः प्रि° ।

मनःकल्पितरूपं वा त्रिपुरायै निवेदयेत् ।
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥ २२ ॥
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।
विद्यान्ते परमेशानि नैवेद्यमनुरीरितः ॥ २३ ॥
परिषिच्य ततो देवि नित्यहोमं समाचरेत् ।
मूलमन्त्रेण देवेशि हुनेत्पञ्चाऽऽहुतीः क्रमात् ॥ २४ ॥
प्राणापानौ तथा व्यान उदानश्च समानकः ।
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम् ॥ २५ ॥
षडाहुतीः षडङ्गेन नित्यहोमोऽयमीरितः ।
नित्यहोमविधिं कृत्वा बलिदानविधिं चरेत् ॥ २६ ॥
ईशाने च तथाऽऽग्नेये नैर्ऋत्ये च तथा प्रिये ।
वायव्ये क्रमतो देवि मण्डलानां चतुष्टयम् ॥ २७ ॥
श्रीचक्रमभितो देवि त्रिकोणं व्योम चाऽऽलिखेत् ।
पूर्वमन्त्रैः समभ्यर्च्य बटुकादिभिरद्रिजे ॥ २८ ॥
एह्येहि देवि पुत्रान्ते बटुकान्तेऽथ नाथ च ।
कपिलान्ते जटाभार भासुरान्ते त्रिनेत्र च ॥ २९ ॥
ज्वालामुख च सर्वान्ते विघ्नान्नाशय नाशय ।
सर्वोपचारसहितं बलिं गृह्ण द्विधापदम् ॥ ३० ॥
वह्निजायान्वितो मन्त्रो बटुकस्य उदाहृतः ।
अनेन विधिना देवि बटुकस्य बलिं प्रिये ॥ ३१ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥३२॥

एतदन्ते महेशानि यांबीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ ३३ ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीनां बलिं हरेत् ॥ ३४ ॥
षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत्प्रिये ।
स्थानक्षेत्रपदं पालधूपदीपादि चाऽऽलिखेत् ॥ ३५ ॥
सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥ ३६ ॥

अनेन मनुना देवि क्षेत्रपालबलिः स्मृतः ।
गांगींगूंत्रयमालिख्य ङेन्तं गणपतिं ततः ॥ ३७ ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चाऽऽनय प्रोच्य सर्वोपपदमालिखेत् ॥ ३८ ॥
चारान्ते सहितं चोक्त्वा बलिं गृह्ण द्विधापदम् ।
वह्निजायान्वितो मन्त्रो गणपस्य बलिं हरेत् ॥ ३९ ॥
वामाङ्गुष्ठानामिकाभ्यां बटुकस्य बलिं हरेत् ।
तर्जन्यनामिके चैव मध्यमोपरि योजयेत् ॥ ४० ॥
योन्याकारेण वामेन योगिनीनां बलिर्भवेत् ।
*अङ्गुष्ठमध्यमानाम(मा) योन्याकारेण योजयेत् ॥ ४१ ॥
वाममुष्टिं विधायाऽऽदौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि क्षेत्रपालबलिर्भवेत् ॥ ४२ ॥
तथा मुष्टेस्तु मध्यस्थामङ्गुलीं दण्डवत्कुरु ।
गजतुण्डा महामुद्रा गणपस्य बलिर्भवेत् ॥ ४३ ॥
अथ वा वामभागे तु मण्डलं चैकमालिखेत् ।
तत्रैव बलिदानं तु कुर्यात्सर्वार्थसिद्धये ॥ ४४ ॥
+आत्मविद्यां शिवैस्तत्त्वैर्गुरुं संतर्प्य देवताम् ।
संतोष्याऽऽनन्दसहितः सर्वकर्माणि साधयेत् ॥ ४५ ॥
अनेन विधिना देवि पूजयेत्परमेश्वरीम् ।
पञ्चसिंहासनोन्नद्धां परमानन्दरूपिणीम् ॥ ४६ ॥
पञ्चसिंहासनोन्नद्धां चित्कलां चिन्तयेत्सदा ।
वर्णलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्प्रिये ॥ ४७ ॥
तर्पणं तु तथा कुर्यात्सर्वसौभाग्यवान्भवेत् ॥ ४८ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरेश्वरीयजनविधिर्नाम पञ्चमः पटलः ॥ ५ ॥

अथ षष्ठः पटलः ।

श्रीदेव्युवाच—

पञ्चसिंहासनगता कथं सा त्रिपुरा परा ।
कथयस्व महेशान कथं सिंहासनं भवेत् ॥ १ ॥

* इदमर्धं ख. पुस्तके नास्ति । + अयं श्लोकः ख. पुस्तके नोपलभ्यते ।

१ क. °ख्य ङेन्तं । २ क. °का मध्ये म° । ३ क. राजमुण्डा । ४ ख. °सनारूढां प°

ईश्वर उवाच—

यथा श्रीत्रिपुरा बाला तथा त्रिपुरभैरवी ।
संपत्प्रदा नाम यस्याः शृणु निर्मलमानसे ॥ २ ॥
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामराजं तथा देवि शिवचन्द्रान्वितं ततः ॥ ३ ॥
पृथ्वीबीजान्तवह्न्याढ्यं तार्तीयं शृणु वल्लभे ।
* शक्तिबीजे महेशानि शिवं वह्निं च योजयेत् ॥ ४ ॥
व्योमादिवह्निसंस्थं तु विशेषं शृणु वल्लभे ।
कुमार्याः परमेशानि हित्वा सर्गं तु बैन्दवम् ॥ ५ ॥
त्रिपुरा भैरवी देवी महासंपत्प्रदा प्रिये ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥ ६ ॥
ब्रह्मानन्दमयी साक्षात्सर्वसाम्राज्यदायिनी ।
ध्यानमस्याः प्रवक्ष्यामि महासंपत्प्रदं प्रिये ॥ ७ ॥
आताम्रार्कसहस्राभां स्फुरच्चन्द्रजटाशिखाम् ।
किरीटरत्नविलसच्चित्रचित्रितमौक्तिकाम् ॥ ८ ॥
स्रवद्रुधिरपङ्काढ्यमुण्डमालावलीयुताम् ।
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ॥ ९ ॥
मुक्ताहारलताराजत्पीनोन्नतघनस्तनीम् ।
+त्रिवलीखचितालग्नां नानाभरणभूषिताम् ॥ १० ॥
रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ॥ ११ ॥
वरदानरतां नित्यं महासंपत्प्रदां स्मरेत् ।
न्यासपूजादिकं सर्वं कुमार्या इव सुव्रते ॥ १२ ॥
त्रिपुरा भैरवी देवी पञ्चसिंहासनान्विता ।
प्रथमं शृणु देवेशि ब्रह्मा सृष्टिकरो यदा ॥ १३ ॥
निश्चेतनोऽपि देवेशि तदा त्रिपुरदेवताम् ।
समाराध्याभवत्कर्ता सृष्टेस्तु परमेश्वरि ॥ १४ ॥
ब्रह्माणं तं समाराध्य तपसा महता प्रिये ।
शक्रोऽभूद्देवराजोऽयं पूर्वस्यां दिशि पालकः ॥ १५ ॥

---

* इदमर्धं ख. पुस्तके नास्ति । + इदमर्धं ख. पुस्तके नास्ति ।

---

१ ख. °स्भवे त° । २ ख. भित्वा । ३ ख. °टाकुलाम् । ४ ख. °म् । वमद्रु° । ५ क. °आदि तां स° ।

तदा प्रसन्ना त्रिपुरा पूर्वसिंहासनस्थिता ।
शृणु देवि प्रवक्ष्यामि पूर्वसिंहासनस्थिताम् ॥ १६ ॥
वाग्भवं बीजमुच्चार्य जीवप्राणसमन्वितम् ।
सकला भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥ १७ ॥
जीवं प्राणं वह्निसंस्थं शक्रस्वरविभूषितम् ।
विसर्गाढ्यं महेशानि विद्या त्रैलोक्यमातृका ॥ १८ ॥
त्रैलोक्यमोहनी देवि परब्रह्मचिदात्मिका ।
चैतन्यभैरवी नाम चेतना निष्कले[1] शिवे ॥ १९ ॥
उद्यद्भास्वत्सहस्राभां नानालंकारभूषिताम् ।
मुकुटोज्ज्वलसच्चन्द्रलेखां रक्ताम्बरान्विताम् ॥ २० ॥
पाशाङ्कुशधरां नित्यां वामहस्तकपालिनीम् ।
वरदाभयशाभाढ्यां पीनोन्नतघनस्तनीम् ॥ २१ ॥
एवं ध्यात्वा[2] यजेद्देवीं पूर्वसिंहासनस्थिताम् ।
द्विरावृत्त्या षडङ्गानि न्यसेत्सर्वाङ्गलक्षणम् ॥ २२ ॥
यन्त्रमस्याः प्रवक्ष्यामि देवि त्रैलोक्यमोहनम् ।
त्रिकोणं चैव षट्कोणं वसुपत्रं वरानने ॥ २३ ॥
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ।
तत्राऽऽवाह्य महादेवीं पूर्ववत्परमेश्वरीम् ॥ २४ ॥
मुद्राः[3] प्रदर्शयेत्पश्चात्परिवारार्चनं यजेत् ।
प्रथमावरणं देवि षडङ्गानां तु पूर्ववत् ॥ २५ ॥
रत्यादिकास्ततः पूज्याः पूर्ववत्परमेश्वरि ।
अग्रे वसन्तं वामे तु कामदेवं वरानने ॥ २६ ॥
चापं दक्षिणकोणे च बाणान्पूर्ववदद्रिजे ।
डाकिनीं राकिनीं चैव लाकिनीं काकिनीं तथा ॥ २७ ॥
शाकिनीं हाकिनीं देवि पश्चिमादिक्रमाद्यजेत् ।
अनङ्गकुसुमा मुख्या वसुपत्रेषु पूर्ववत् ॥ २८ ॥
परभृत्सारसौ चैव शुकमेघाह्वयौ पुनः ।
अपाङ्गभ्रूविलासौ च हावभावौ प्रपूजयेत् ॥ २९ ॥
इन्द्राद्या लोकपालास्तु क्रमेण परिपूजयेत् ।
पूर्वसिंहासने देवि कथिता वीरवन्दिते ॥ ३० ॥

---

१ ख. निष्कले । २ क. °त्वा जपेद्दे° । ३ ख. मुद्रादि दर्शयन्पश्चा° ।

कामेश्वरी च रुद्राणी पूर्वसिंहासनस्थिता ।
एतस्या एव विद्याया बीजद्वयमुदाहृतम् ॥ ३१ ॥
तदन्ते परमेशानि नित्यक्लिन्ने मदद्रवे ।
एतस्या एव तार्तीयं रुद्राणी परमेश्वरि ॥ ३२ ॥
पूजाध्यानादिकं देवि चैतन्यायाश्च पूर्ववत् ।
त्रिकोणे तु विशेषोऽस्ति कथयामि तवानघे ॥ ३३ ॥
अग्रकोणक्रमेणैव नित्यां क्लिन्नां मदद्रवाम् ।
षडङ्गावरणात्पश्चात्पूजयेत्सर्वसिद्धये ॥ ३४ ॥
अनेनैव प्रकारेण पूर्वसिंहासनस्थिताम् ।
त्रिपुरां भैरवीं देवीं पूजयेत्परमेश्वरीम् ॥ ३५ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे पूर्वसिंहासनकथनं नाम षष्ठः पटलः ॥ ६ ॥

---

अथ सप्तमः पटलः ।

---

ईश्वर उवाच—

एतामाराध्य देवेशि महात्रिपुरभैरवीम् ।
पालकोऽभून्निश्चलोऽपि प्रेतत्वात्सुरवन्दिते ॥ १ ॥
योगनिद्राछलाद्देवि प्रेतत्वं तस्य निश्चलम् ।
तद्ध्यानेन स्वयं शक्तिरभूत्कुवलयेक्षणे ॥ २ ॥
तामाराध्य महाविष्णुरघोरेण मुखेन च ।
त्रिपुरो निर्जितो देवि त्रैलोक्यभयकारकः ॥ ३ ॥
तदा सिंहासने प्रौढा दक्षिणे परमेश्वरि ।
मन्त्रं तस्याः प्रवक्ष्यामि रिपुभारनिकृन्तनम् ॥ ४ ॥
शिवचन्द्रौ मादनान्तं पान्तं वह्निसमन्वितम् ।
शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं प्रिये ॥ ५ ॥
संपत्प्रदाया भैरव्याः कामराजं तदेव हि ।
सदाशिवस्य बीजं तु सिंहासनगतस्य च ॥ ६ ॥
एषा विद्या महेशानि वर्णितुं केन शक्यते ।
ध्यानमस्याः प्रवक्ष्यामि रिपुभारनिकृन्तनम् ॥ ७ ॥

---

१ क. °न्या इव पू° । २ क. °रणं पश्चा° । ३ ख. °द्रामला° । ४ ख. °णे । तमा° ।
५ ख. °ष्णुमघो° ।

उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम् ।
नानालंकारसुभगां सर्ववैरिनिकृन्तनीम् ॥ ८ ॥
स्रवद्रुधिरमुण्डालिकलितां रक्तवाससम् ।
त्रिशूलं डमरुं चैव खड्गं खेटकमेव च ॥ ९ ॥
पिनाकं च शरान्देवि पाशाङ्कुशयुगं क्रमात् ।
पुस्तकं चाक्षमालां च शिवसिंहासने स्थिताम् ॥ १० ॥
एवं ध्यात्वा महेशानि पूजामण्डलमारभेत् ।
त्रिकोणं चैव वृत्तं च वृत्ताष्टदलैर्नीरजम् ॥ ११ ॥
वृत्तं भूसदनोपेतमेषा त्रिपुरयन्त्रिका ।
वामां ज्येष्ठां च रौद्रीं च कालीं च वरलोचने ॥ १२ ॥
कलाढ्यां च बलाढ्यां च यजेद्विकारिणीं प्रिये ।
बलप्रमथिनीं चैव सर्वभूतान्तमावदेत् ॥ १३ ॥
दमनीं च तथाऽर्चित्वा मनोन्मनीपदान्विताम् ।
एवं पीठं समभ्यर्च्य ततः सिंहासनं यजेत् ॥ १४ ॥
अघोरविद्यारूपं तु महापापनिकृन्तनम् ।
अघोरे वाग्भवं देवि घोरे तु भुवनेश्वरीम् ॥ १५ ॥
घोरघोरतरेभ्यश्च विलिख्य सुरवन्दिते ।
सर्वेभ्यः सर्वशर्वेभ्यो देव्या बीजयुगं लिखेत् ।
नमस्तेऽस्तुपदं कुर्याद्रुद्ररूपे हसौ लिखेत् ॥ १६ ॥
त्रिंशद्भिश्च त्रिभिर्वर्णैर्विद्येयं कथिता प्रिये ।
अनेन मनुना देवि यजेत्सिंहासनं बुधः ॥ १७ ॥
आवाहनादिकं कुर्यात्क्रमार्चनमतः परम् ।
आदावङ्गावृत्तिर्देवि द्विरावृत्त्याऽङ्गपूजनम् ॥ १८ ॥
रत्यादित्रयमभ्यर्च्य तथाऽनङ्गादिका यजेत् ।
ब्राह्म्यादियुग्मं संपूज्य वसुपत्रेषु मातृकाः ॥ १९ ॥
भूबिम्बे लोकपालांश्च सायुधान्परमेश्वरि ।
द्वितीयसिंहासनगां पूजयेद्रुद्रभैरवीम् ॥ २० ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे द्वितीयसिंहासने रुद्रभैरवीयजनं नाम
सप्तमः पटलः ॥ ७ ॥

---

१ ख. च विष्णुसिं° । २ ख. °माचरेत् । ३ ख. °लमाद्रिजे । वृ° । ४ ख. भूमण्डलाबी
५ ख. तथा यष्ट्वा म° । ६ क. °वं चोक्त्वा अघोरे भु° । ७ क. °रे रम्ये शर्वे सर्वाधिदेवते ।
८ ख. °दिसंकल्पक° ।

अथाष्टमः पटलः ।

---

ईश्वर उवाच—

पश्चिमे भैरवी देवी षट्कूटा परमेश्वरी ।
यत्स्फूर्त्या स शिवो देवि सृष्टिसंहारणक्षमः ॥ १ ॥
डाकिनीराकिनीबीजे लाकिनीकाकिनीयुगात् ।
बीजे आहृत्य देवेशि योजयेच्चन्द्रसूर्ययोः ॥ २ ॥
आद्यमैकारसंयुक्तमन्यदौकारमण्डितम् ।
शक्रस्वरसमायुक्तं तार्तीयं बीजमालिखेत् ॥ ३ ॥
बिन्दुनादकलाक्रान्तं तृतीयं शैलसंभवे ।
एषा विद्या महेशानि रुद्रसिंहासने स्थिता ॥ ४ ॥
ध्यानमस्याः प्रवक्ष्यामि सर्वभूतनिकृन्तनम् ।
बालसूर्यप्रभां देवीं जपाकुसुमसंनिभाम् ॥ ५ ॥
मुण्डमालावलीरम्यां बालसूर्यसमांशुकाम् ।
सुवर्णकलशाकारपीनोन्नतपयोधराम् ॥ ६ ॥
पाशाङ्कुशौ पुस्तकं च दधानां जपमालिकाम् ।
एवं ध्यात्वा यजेद्देवीं मानसैरुपचारकैः ॥ ७ ॥
द्विरावृत्त्या षडङ्गानि विधाय परमेश्वरि ।
यन्त्रमस्या वरारोहे त्रिकोणं तत्पुटं लिखेत् ॥ ८ ॥
बाहिरष्टदलं पद्मं रविपत्रं समालिखेत् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ ९ ॥
षडङ्गावरणं देवि पूर्ववत्पूजयेत्प्रिये ।
रत्यादित्रितयं देवि त्रिकोणे परिपूजयेत् ॥ १० ॥
डाकिन्याद्यास्तु षट्कोणे वसुपत्रे ततः परम् ।
ब्राह्म्यादियुगुलं पश्चाद्रविपत्रे ततः परम् ॥ ११ ॥
बालायाः पीठशक्तीस्तु वामाद्याः पूजयेत्प्रिये ।
चतुरस्रे लोकपालान्सायुधान्परमेश्वरि ॥ १२ ॥
एवं पूजाविधिं कुर्याद्भोगमोक्षफलाप्तये ।
अनेनैव विधानेन नित्याख्यां भैरवीं यजेत् ॥ १३ ॥

---

१ क. देवि ष° । २ ख. °युग्मम् । बी° । ३ ख. °रक्रमाद्देवि ता° । ४ ख. °न्तं त्रितयं शै° । ५ ख. °तघनस्तनीम् । ६ ख. °त्रं ततो लि° । ७ ख. °फलप्रदम् । अ° ।

सर्वसौभाग्यदां नित्यां सर्वसाम्राज्यदायिनीम् ।
एतस्या एव विद्यायाः षड्वर्णान्क्रमतः स्थितान् ॥ १४ ॥
विपरीतान्वदेद् प्रौढे विद्येयं भोगमोक्षदा ।
नित्याख्या भैरवी देवि रिपुभारनिकृन्तनी ॥ १५ ॥
न्यासपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ॥ १६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे पश्चिमसिंहासनकथनं नामाष्टमः पटलः ॥ ८ ॥

---

अथ नवमः पटलः ।

---

ईश्वर उवाच—

शृणु देवि महाविद्यां चिन्तितेष्टफलप्रदाम् ।
यस्या विज्ञानमात्रेण भुवनाधिपतिर्भवेत् ॥ १ ॥
हंसाद्यं वाग्भवं चाऽऽद्यं हसकान्ते सुरेश्वरि ।
भूबीजं भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥ २ ॥
शिवचन्द्रौ महेशानि शक्रस्वरविभूषितम् ।
बिन्दुनादकलाक्रान्तं तृतीयं बीजमुद्धृतम् ॥ ३ ॥
एषा विद्या महेशानि भुवनेश्वरभैरवी ।
मध्यबीजेन देवेशि षड्दीर्घस्वरभेदिना ॥ ४ ॥
षडङ्गानि प्रविन्यस्य ध्यायेद्देवीं चतुर्भुजाम् ।
जपाकुसुमसंकाशां दाडिमीकुसुमप्रभाम् ॥ ५ ॥
चन्द्ररेखाजटाजूटां त्रिनेत्रां रक्तवाससम् ।
नानालंकारसुभगां पीनोन्नतघनस्तनीम् ॥ ६ ॥
पाशाङ्कुशवराभीतीर्धारयन्तीं शिवां स्मरेत् ।
एवं ध्यात्वाऽर्चयेद्देवीं यन्त्रोद्धारं च पूर्ववत् ॥ ७ ॥
चैतन्यभैरवी देवी यन्त्रवरपरमेश्वरि ।
सिंहासनं समभ्यर्च्य परिवारार्चनं यजेत् ॥ ८ ॥
षडङ्गावरणं देवि पूर्ववत्परिपूजयेत् ।
रत्याद्याः पूजयेद्देवि त्रिकोणे तदनन्तरम् ॥ ९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च पूज्यास्तत्रैव सुन्दरि ।
डाकिन्याद्यास्तथा पूज्या वसुपत्रे ततः परम् ॥ १० ॥

---

१ ख. °सौख्यप्रदां । २ क. °श्वरप्रौ° । ३ क. हंसाद्यं ।

अनङ्गकुसुमाद्याश्च ब्राह्मयादियुगुलं ततः ।
भूबिम्बे लोकपालांश्च बटुकाद्यांश्च पूजयेत् ॥ ११ ॥
योगिनीनां चतुःषष्टिं पूजयेत्सुरवन्दिते ।
सदाशिवसखा यस्मात्कुबेरः परमेश्वरि ॥ १२ ॥
येनेयं प्रार्थिता देवी राजराजस्ततो भवेत् ।
तेनैव प्रार्थिता विद्या गौरी गौरफलप्रदा ॥ १३ ॥
अन्नपूर्णेश्वरी नाम सर्वसंपत्प्रदा सताम् ।
अनया विद्यया देवि कुबेरो धननायकः ॥ १४ ॥
लोकपालेषु सर्वेषु धनरत्नादिपूर्णता ।
तथाऽन्नपूर्णता तस्मिन्सुस्थिराऽस्याः प्रसादतः ॥ १५ ॥
अन्नपूर्णा महादेवि साक्षात्कामदुघाऽद्रिजे ।
मन्त्रमस्याः प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ॥ १६ ॥
तारं च भुवनेशानीं श्रीबीजं कामराजकम् ।
हृदन्ते भगवत्यर्णा माहेश्वरि पदं लिखेत् ॥ १७ ॥
अन्नपूर्णेऽग्निजाया च विद्येयं विंशदक्षरी ।
अनया सदृशी विद्या सिद्धिदा नास्ति भूतले ॥ १८ ॥
भुवनेशा महेशानि षड्दीर्घस्वरभिन्नया ।
षडङ्गानि महेशानि कुर्यान्न्यासादनन्तरम् ॥ १९ ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य पङ्क्तिश्छन्दो वरानने ।
अन्नपूर्णेश्वरी देवि देवता परिकीर्तिता ॥ २० ॥
बीजं च भुवनेशानि श्रीबीजं शक्तिरुच्यते ।
कीलकं कामराजं स्यात्षडङ्गानन्तरं ततः ॥ २१ ॥
* एकमेकं पुनश्चैकं पुनरेकं द्वयं चतुः ।
चतुश्चतुस्तथा द्वाभ्यां पदान्येतानि पार्वति ॥ २२ ॥
पदानि नव देवेशि नव द्वारेषु विन्यसेत् ।
मूर्धादिगुदपर्यन्तं पुनस्तेषु वरानने ॥ २३ ॥
गुदादिब्रह्मरन्ध्रान्तं पदानां नवकं न्यसेत् ।
ब्रह्मरन्ध्रास्यहृदयमूलाधारेष्वनुक्रमात् ॥ २४ ॥

---

* अयं श्लोकः ख. पुस्तके नास्ति ।

---

१ ख. देवी दे° ।

चतुर्बीजानि विन्यस्य स्वरेष्वन्यान्प्रविन्यसेत् ।
गोलकं च ततो देवि विन्यस्य विधिवत्प्रिये ॥ २५ ॥
प्राणायामं प्रकुर्वीत पूजामण्डलमालिखेत् ।
त्रिकोणं च चतुःपत्रं वसुपत्रं ततः परम् ॥ २६ ॥
कलापत्रं च भूबिम्बं चतुर्द्वारं समालिखेत् ।
सिंहासनस्य परितः पीठदेवीः समर्चयेत् ॥ २७ ॥
सिंहासने दक्षिणे तु कथिताः पीठनायकाः ।
ता एव पूजयेत्पीठे वामाद्याः परमेश्वरि ॥ २८ ॥
जया च विजया चैव अजिता चापराजिता ।
नित्या विलासिनी दोग्ध्री अघोरा मङ्गलात्मिका ॥ २९ ॥
नवमी परमेशानि सिंहासनसमीपगाः ।
समावाह्य यजेद्देवीं ध्यानं कुर्वन्समाहितः ॥ ३० ॥
तप्तकाञ्चनवर्णाभां बालेन्दुकृतशेखराम् ।
नवरत्नप्रभादीप्तमुकुटां कुङ्कुमारुणाम् ॥ ३१ ॥
चित्रवस्त्रपरीधानां मदिराक्षीं त्रिलोचनाम् ।
सुवर्णकलशाकारपीनोन्नतघनस्तनीम् ॥ ३२ ॥
गोक्षीरधामधवलं पञ्चवक्त्रं त्रिलोचनम् ।
प्रसन्नवदनं शान्तं नीलकण्ठविराजितम् ॥ ३३ ॥
कपर्दिनं स्फुरत्सर्पभूषणं कुन्दसंनिभम् ।
नृत्यन्तमतिसंहृष्टं दृष्ट्वाऽऽनन्दमयीं पराम् ॥ ३४ ॥
सानन्दमुग्धल्लोलाक्षीं मेखलाढ्यनितम्बिनीम् ।
अन्नदानरतां नित्यां भूमिश्रीभ्यामलंकृताम् ॥ ३५ ॥
एवं ध्यात्वा यजेद्देवि षडङ्गावरणं यजेत् ।
अग्नीशासुरवायव्यमध्ये दिक्ष्वङ्गपूजनम् ॥ ३६ ॥
अथ वक्ष्ये महेशानि त्रिकोणस्य च पूजनम् ।
तारं प्रासादबीजं च हृच्छिवाय ततः परम् ॥ ३७ ॥
सप्ताक्षरी महाविद्या त्वनया देवि पूजयेत् ।
नृत्यन्तमीश्वरं देवि त्रिकोणाग्रे सुरेश्वरि ॥ ३८ ॥
ॐ नमः पदमाभाष्य ततो भगवते पदम् ।
ततो वराहरूपाय भूर्भुवःस्वःपतिं तथा ॥ ३९ ॥

१ क. °पर्णा । स° । २ क. °हृष्टं ह° । ३ ख °मुग्धलोला° । ४ क. °था ह्मेन्तं भू°

ङेन्तं च भूपतिं च त्वं मे देहीति च दापय ।
वह्निजायान्वितो मन्त्रो वराहस्य वरानने ॥ ४० ॥
अनया विद्यया देवि वामकोणे प्रपूजयेत् ।
ॐनमःपदमाभाष्य ङेन्तं नारायणं लिखेत् ॥ ४१ ॥
नारायणं दक्षकोणे क्रमेण परिपूजयेत् ।
वामदक्षिणयोः पूज्ये भूश्रियौ परमेश्वरि ॥ ४२ ॥
एकेन मनुना देवि कथयामि तवानघे[1] ।
ॐनमो हि पदं चान्नं मे देह्यन्नाधिपान्तके ॥ ४३ ॥
तयेममान्नं[2] संलिख्य प्रदापय ततः परम् ।
वह्निजायान्वितो मन्त्रः संपुटीकृत्य[3] योजयेत् ॥ ४४[4] ॥
ग्लौमात्मकेन रमया वामदक्षिणयोः क्रमात् ।
ततश्चतुर्दले[5] पूज्या पश्चिमादिक्रमेण तु ॥ ४५ ॥
तारेण परविद्यां च भुवनेशीं तदात्मना ।
कमलां रमया भद्रे कामेन सुभगां यजेत् ॥ ४६ ॥
वसुपत्रे महेशानि ब्राह्म्याद्याः पश्चिमादितः ।
षोडशारे परेशानि चन्द्रमण्डलरूपिणीः ॥ ४७ ॥
कलाः षोडश संपूज्याः पश्चिमादिक्रमेण हि ।
अमृता मानसी पुष्टिस्तुष्टिः प्रीती रतिस्तथा ॥ ४८ ॥
श्रीश्च ह्रीश्च स्वधा[6] रात्रिर्ज्योत्स्ना[7] हैमवती तथा ।
छाया च पूर्णिमा नित्या अमावास्या च षोडशी ॥ ४९ ॥
शेषवर्णैः[8] प्रपूज्यास्तु अन्नपूर्णान्तशब्दकाः ।
चतुरस्रे लोकपालान्क्रमेण परिपूजयेत् ॥ ५० ॥
इत्युत्तरपतेः[9] सम्यक्पूजितान्नसुवर्णदा ।
स्वशक्त्या या करोत्येव राजराजं धनाधिपम् ॥ ५१ ॥
सिद्धिप्रदा सिद्धिविद्या ममाप्यन्नप्रदा प्रिये ।
भुवनेश्वरभैरव्या भेदान्तरमथोच्यते ॥ ५२ ॥
सहाद्या सैव देवेशि तदा सा सकलेश्वरी ।
ध्यानपूजादिकं सर्वमेतस्या एव पार्वति ॥ ५३ ॥

---

१ क. °घे । अन्नं महिपदं । २ क. ख. तयेम° । ३ क. °त्य पूज° । ४ ख. पूजां प° । ५ क. °ण पुर° । ६ ख. सुधा । ७ ख. °त्स्ना हेमाव° । ८ क. °र्णास्तु शब्दितः । च° । ९ क. इत्येवं पूजयेत्सम्य° ।

उत्तरस्यां वरारोहे सिंहासनमिदं दिशि ।
संपत्प्रदा भैरवी च विद्धि कौलेशभैरवी ॥ ५४ ॥
हसराद्या भैरवी सा त्रिषु बीजेषु पार्वति ।
इयं तु सहराद्या स्यात्पूजाध्यानादिकं तथा ॥ ५५ ॥
एतस्या एव विद्याया आद्यन्ते रेफवर्जिते ।
तदेयं परमेशानि नाम्ना सकलभैरवी ॥ ५६ ॥
संपत्प्रदा भैरवी च ध्यानपूजादिकं प्रिये ।
पञ्चसिंहासनमयी महात्रिपुरभैरवी ॥ ५७ ॥
चतुराम्नायविद्याभिर्मान्यं सिंहासनं प्रिये ।
हस्रीमात्मकमुच्चार्य सह्रीमात्मकमद्रिजे ॥ ५८ ॥
शक्तिः सकलह्रीमन्ते चतुर्बीजमुदाहृतम् ।
श्रीबीजं कुरु तार्तीयं नित्यां वेदाक्षरी भवेत् ॥ ५९ ॥
उन्मनी नाम विद्येयं भोगमोक्षफलप्रदा ।
पूर्वाम्नाये महाविद्या दक्षिणाम्नाये उच्यते ॥ ६० ॥
वाग्भवं बीजमुच्चार्य क्लिन्ने कामस्य बीजकम् ।
मदद्रवे कुले हस्रौ विद्येयं भोगिनी प्रिये ॥ ६१ ॥
दक्षिणाम्नायविद्येयं पश्चिमाम्नाय उच्यते ।
वाग्भवं च परा श्रीश्च हसखफ्रेमिति प्रिये ॥ ६२ ॥
हसौमन्तास्ततो देवि पञ्चैते प्रणवाः स्मृताः ।
भगवत्यम्ब आलिख्य पृथक्पदमथेश्वरि ॥ ६३ ॥
चतुर्थं प्रणवं चैव हसखफ्रेमिति प्रिये ।
कुब्जिके चैव ह्स्रां च ह्स्रीं ह्स्रौं ततः परम् ॥ ६४
अघोरे चैव घोरे च त्वघोरमुखि चाऽऽलिखेत् ।
ह्स्रां ह्स्रीं किणिद्वंद्वं विच्चे द्वात्रिंशदक्षरी ॥ ६५ ॥
पूर्वोक्तैः प्रणवैर्देवि संपुटीकृत्य संस्मरेत् ।
कुब्जिकेयं महाविद्या पश्चिमाम्नायदेवता ॥ ६६ ॥
ख्फ्रेमात्मकमुच्चार्य महाचण्डपदं लिखेत् ।
योगेश्वरीपदं पश्चाद्विद्येयं कालिका प्रिये ॥ ६७ ॥

---

१ ख. °रवी च । २ क. च सिद्धि कौ° । ३ ख. क्तिः कलाभ्यामन्ते च तु
४ ख. विद्या । ५ क. °त् । कामिणी कामवि° । ६ ख. °यमुच्य° । ७ क. °ख
८ ख. हसभौं च त° । ९ ख. °त । च्छूं च च्छ्रीं च कि° ।

उत्तराम्नायविद्येयं नाम्ना कालीति विश्रुता ।
एताभिः परमेशानि पूज्यं सिंहासनं सदा ॥ ६८ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे सिंहासनविद्याविधानं नाम नवमः पटलः ॥ ९ ॥

---

अथ दशमः पटलः ।

---

श्रीदेव्युवाच—

त्रिपुरा द्विविधा देव भवता प्रकटी कृता ।
त्रिविधेति यदुक्तं तत्प्रकटी कुरु शंकर ॥ १ ॥

ईश्वर उवाच—

परं ब्रह्मस्वरूपं यन्नादबिन्दुत्रयात्मकम् ।
शिवशक्तिमयं तत्तु कथयामि तवानघे ॥ २ ॥
व्याप्य तिष्ठति विश्वं सा शिवं च परमेश्वरि ।
पूर्वं गुणैस्तु कथिता शिवशक्त्यात्मकं शृणु ॥ ३ ॥
हकारादिसकारान्ता मातृका शक्तिरव्यया ।
हकारः परमेशानि केवलं शिव उच्यते ॥ ४ ॥
आद्यन्ताक्षरभावेन तदाऽहं सकलात्मकः ।
यदुच्यते मातृकार्णैस्तत्सर्वमहमीश्वरि ॥ ५ ॥
हकारः परमेशानि शून्यरूपी सदाऽव्ययः ।
सकारः शक्तिरूपत्वात्परावाची विसर्गवान् ॥ ६ ॥
उत्पत्तेः कारणं यस्माच्छक्तिरित्यभिधीयते ।
आत्मानं दर्शयेद्योगः सोऽहंशब्देन सुन्दरि ॥ ७ ॥
बिन्दुत्रयसमायोगान्महात्रिपुरसुन्दरी ।
नादरूपेण सा देवी हकारार्धस्वरूपिणी ॥ ८ ॥
हकारः परमेशानि शिवरूपी यतस्तदा ।
तस्यार्धाङ्गं महाशक्तिर्हकारार्धस्वरूपिणी ॥ ९ ॥
अत एव महाविद्या महात्रिपुरसुन्दरी ।
नित्येति कथ्यते देवि चित्कला परमेश्वरी ॥ १० ॥

---

१ ख. °रान्वय° । २ क. °ताभ्यः प° । ३ ख. °न्दुकलात्म° । ४ °णु । अक्षा° । ५ ख. वर्णै° । ६ ख. °दाशिवः । स° । ७ ख. °श्री च स° ।

श्रीगुरोः कृपया भद्रे संप्रदायकुलान्वितः ।
प्रातरुत्थाय देवेशि गुरुं नत्वा स्वनामभिः ॥ ११ ॥
संध्यास्नानादिकं देवि विधाय मनुवित्तमः ।
सर्वशृङ्गारवेषाढ्यः कर्पूरघुसृणादिभिः ॥ १२ ॥
महार्हैश्चन्दनाद्यैश्च दीप्ताङ्गः कुङ्कुमारुणः ।
नवरत्नविभूषाढ्यो रक्ताम्बरविराजितः ॥ १३ ॥
ताम्बूलरागवदनो मदिरानन्दमानसः ।
यागमन्दिरमागत्य लाक्षाचित्रविचित्रितम् ॥ १४ ॥
अनेकधूपबहलं पुष्पप्रकरपूरितम् ।
गोमयेन च संलिप्तं चारुपुष्पवितानितम् ॥ १५ ॥
मनोहरे मृदुश्लक्ष्ण आसने उपविश्य तु ।
मन्त्रोद्धारं प्रकुर्वीत सर्वकार्यार्थसिद्धये ॥ १६ ॥
आद्यं वाग्भवमुच्चार्य कामराजं द्वितीयकम् ।
कुमार्यास्तु तृतीयं तु त्रिपुरा परमेश्वरि ॥ १७ ॥
करशुद्धिकरी विद्या प्रथमा *परमेश्वरि ।
कुमारी तु द्वितीया स्यात्त्रिपुरेशी महेश्वरि ॥ १८ ॥
त्रिपुरेश्यादिमं त्यक्त्वा भुवनेशीं परिक्षिपेत् ।
अनयाऽऽत्मासनं दद्यात्त्रिपुरेश्या षडङ्गकम् ॥ १९ ॥
त्रिपुरेशी महेशानि त्रिबीजा हृत्स्थिता यदा ।
चक्रासनगतां देवि विद्धि त्रिपुरवासिनीम् ॥ २० ॥
त्रिपुरेशी महेशानि वाग्भवे कामराजके ।
शिवचन्द्रसमायुक्ता तार्तीये शिवरूपिणी ॥ २१ ॥
सर्वमन्त्रासनगता त्रिपुरा श्रीरियं प्रिये ।
आत्मासनगतायास्तु हित्वा तार्तीयमद्रिजे ॥ २२ ॥
बलेर्मात्मकमारोप्य साध्यसिद्धासनस्थिता ।
(+त्रिपुरामालिनी प्रोक्ता सिद्धाख्यां त्रिपुरां शृणु ॥२३॥

---

* एतस्याग्रे क. ग. पुस्तकयोः 'श्री बीजं च तृतीयं तु त्रिपुरा परमेश्वरि' इतीदमर्धं दृश्यते।
+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः।

---

१ ख. °हाम्मृगमदोद्दाम लिप्ता° । २ ख. मदनान° । ३ ख. °पूजित° । ४ क. मातृक° ।
५ ख. 'त्रिपुरा मालिनीयं तु आद्या लक्ष्मी परा ततः । देवि त्रिपुरासिद्धेयं कथिता परमेश्वरि ।'
इति पाठान्तरम् ।

भुवनेशी श्रिया युक्ता कुमारी च तथोत्तमा ।
मूर्तिविद्या समुद्दिष्टा माया लक्ष्मीः पुरःस्थिता ॥ २४ ॥
अनया विद्यया देवि यजेत्त्रिपुरसिद्धिकाम् ।)
* मायालक्ष्म्योस्तु बीजे द्वे शक्तिबीजं तृतीयकम् ॥ २५ ॥
त्रिपुराद्या त्र्यम्बिकेयमष्टमी परिकीर्तिता ।
संपत्प्रदा भैरवी या तस्यास्तार्तीयबीजके ॥ २६ ॥
बिन्दुं हित्वा तत्र सर्गं निक्षिपेत्सुरसुन्दरि ।
अनयाऽऽवाहनं देवि कारयेत्सुरवन्दिते ॥ २७ ॥
मूर्तिविद्या समुद्दिष्टा माया लक्ष्मीः परा स्थिता ।
अनया विद्यया देवि यजेत्त्रिपुरसिद्धिदा[म्] ॥ २८ ॥
सिद्धाम्बा वाहिनीमूर्तिविद्या च सुरसुन्दरि ।
मूलविद्यां शृणु प्रौढे सकलागमसेविताम् ॥ २९ ॥
सर्वदर्शनवन्द्यां च चित्कलामव्ययां प्रिये ।
भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ॥ ३० ॥
अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ।
महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवाः ॥ ३१ ॥
लकारात्पृथिवी देवि सशैलवनकानना ।
पञ्चाशत्पीठसंपन्ना सर्वतीर्थमयी परा ॥ ३२ ॥
सर्वगङ्गामयी सर्वक्षेत्रस्थानमयी शिवे ।
सकाराच्चन्द्रताराादिग्रहराशिस्वरूपिणी ॥ ३३ ॥
हकाराच्छिवसंवादव्योममण्डलसंस्थिता ।
ईकाराद्विश्वकर्त्रीयं माया तुर्यात्मिका प्रिये ॥ ३४ ॥
एकाराद्वैष्णवी शक्तिर्विश्वपालनतत्परा ।
रकारात्तेजसा युक्ता परं ज्योतिःस्वरूपिणी ॥ ३५ ॥
ककारात्कामदा कामरूपिणी स्फुरदव्यया ।
अर्धचन्द्रेण देवेशि विश्वयोनिरितीरिता ॥ ३६ ॥
बिन्दुना शिवरूपेण शून्यरूपेण साक्षिणी ।
अनया सह सर्वत्र व्याप्तिनिश्चलताऽऽत्मना ॥ ३७ ॥

---

* अयं श्लोकः ख. पुस्तके नास्ति ।

---

१ क. °द्धाम्बां वा° । २ क. °विद्यां च शृणु सु° । ३ क. मन्त्रो मे° । ४ क. °द्भवः । ह° । ५ ख. व्याप्य नि° ।

एवं परब्रह्मरूपा मेरुणाऽनेन सुव्रते ।
एभिर्नवात्मकैर्वर्णैर्जायते त्रिपुरामनुः ॥ ३८ ॥
अन्यथा नैव निष्पत्तिर्नास्ति श्रीत्रिपुरामनौ ।
श्रीचक्रमपि देवेशि मेरुरूपं न संशयः ॥ ३९ ॥
लकारः पृथिवीबीजं तेन भूबिम्बमुच्यते ।
सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकः ॥ ४० ॥
तस्मात्षोडशपत्रं तु हकारः शिव उच्यते ।
अष्टमूर्तिः सदा भद्रे तस्माद्वसुदलं भवेत् ॥ ४१ ॥
ईकारस्तु महामाया भुवनानि चतुर्दश ।
पालयन्ती परा तस्माच्छक्रकोणं भवेत्प्रिये ॥ ४२ ॥
शक्तिरेकादशस्थाने स्थित्वा सूते जगत्त्रयम् ।
विश्वयोनिरिति ख्याता सा विष्णुर्दशरूपकम् ॥ ४३
रकारात्परमेशानि चक्रं व्याप्य विजृम्भते ।
दशकोणकरी यस्माद्रकारो ज्योतिरव्ययः ॥ ४४ ॥
कलादशान्वितो वह्निर्दशकोणप्रकारकः ।
ककारान्मदनो देवि शिवश्चाष्टस्वरूपकः ॥ ४५ ॥
योनिवश्यं तदा चक्रे वसुयोन्यङ्कितं भवेत् ।
अर्धमात्रा गुणान्सूते नादरूपा यतस्ततः ॥ ४६ ॥
त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।
कामेश्वरस्वरूपं तु विश्वाकारस्वरूपकम् ॥ ४७ ॥
श्रीचक्रं तु वरारोहे श्रीविद्यावर्णसंभवम् ।
तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत् ॥ ४८ ॥
भूप्रदेशे समे वर्ये सिन्दूररजसाऽथ वा ।
कुङ्कुमस्य रजोभिस्तु भूमौ चक्रं समालिखेत् ॥ ४९
ऋजुरेखं नेत्ररम्यं संधिभेदसमं ऋजु ।
अथ वा हेमरौप्याभ्यां ताम्रेण बहुधातुभिः ॥ ५०
पट्टं विरच्य श्रीखण्डरक्तचन्दनसंभवे ।
पट्टे संस्थाप्य विलिखेल्लेखन्या हेमया प्रिये ॥ ५१

---

१ ख. °था सैव । २ ख. °स्तु सदा मा । ३ क. ग. °रेव दश° । ४ ख. मू
५ ख. °री तस्माद्रकाराज्ज्योति° । ६ ख. °प्रवर्तकः । ७ क. शिवं चाष्ट° । ८ क. °क
°निरस्थ त इति पाटान्तरम् । १० ख. चक्रं त इति पाठान्तरम् । ११ क. ग. °मतार

रोचनाकुङ्कुमाभ्यां तु कस्तूरीचन्दनेन्दुभिः ।
ईशानादग्निपर्यन्तमृजुरेखां समालिखेत् ॥ ५२ ॥
ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ।
एकीकृत्य च वारुण्यां शक्तिरेखा परा प्रिये ॥ ५३ ॥
त्रिकोणाकाररूपेयं तस्या उपरि संलिखेत् ।
त्रिकोणाकाररूपं तु शक्तिद्वयमुदाहृतम् ॥ ५४ ॥
पूर्वशक्त्यग्रभागे तु मानयष्टिवदालिखेत् ।
रेखां तु परमेशानि वायुराक्षसकोणगाम् ॥ ५५ ॥
संधिभेदक्रमेणैव तयोः शक्त्योस्ततः परम् ।
रेखे आकृष्य कोणाभ्यां तदग्रात्पूर्वगे कुरु ॥ ५६ ॥
वह्निमण्डलमेतत्तु पूर्वाग्रं वीरवन्दिते ।
चक्रत्रयमभूत्तत्र ततः शृणु वरानने ॥ ५७ ॥
पूर्वशक्तीशवह्निभ्यां कोणाभ्यां सुरवन्दिते ।
पूर्वरेखां तु विस्तार्य तथा पश्चिमवह्नितः ॥ ५८ ॥
वायुराक्षसकोणाभ्यां रेखां[1] पश्चिमगां तथा ।
विस्तार्य योजयेद्देवि संधिभेदक्रमेण तु ॥ ५९ ॥
योन्यग्रगां पूर्वदेशे दक्षिणोत्तरतः क्रमात् ।
तथा रेखे[2] वह्निसंस्थे पश्चिमस्यां दिशि क्रमात् ॥ ६० ॥
कोणाग्राभ्यां[3] योजयित्वा दशकोणं तथा[4] भवेत् ।
तथैव देवदेवेशि द्वितीयं दशकोणकम् ॥ ६१ ॥
ईशानवह्निगे रेखे पूर्वयोन्यग्रयोः क्रमात् ।
विस्तार्य योजयेत्पश्चात्पश्चिमायां दिशि क्रमात् ॥ ६२ ॥
वायुराक्षसकोणाग्रे रेखे विस्तार्य सुन्दरि ।
पश्चिमाग्रे तथा देवि योजयेदिन्द्रदिग्गते ॥ ६३ ॥
एकत्र पूर्वकोणाग्रचुम्बिनी तु मनोहरा ।
योजयेद्देवदेवेशि यथा पङ्क्त्यस्रकं भवेत् ॥ ६४ ॥
दक्षकोणस्य देवेशि त्यक्त्वा कोणचतुष्टयम् ।
दशकोणान्तरे[5] देवि मध्ये रेखे प्रकाशयेत् ॥ ६५ ॥

---

१ ख. रेखाभ्यां पश्चिमां त° । २ ख. °खेयोनिसं° । ३ ख. °जाग्रगां यो° । ४ ख. यथा ।
५ क. दक्षिणोत्तरयोर्देवि मध्ये रेखाः प्र° ।

द्वे दक्षिणे विभागे तु तथा चोत्तरभागके ।
षट्कोणस्य ततो देवि संधिभेदक्रमेण तु ॥ ६६ ॥
योनिं वह्निं च संयोज्य शक्रारं जायते सदा ।
कक्षामध्यगता रेखा ऋजुरूपास्तु योजयेत् ॥ ६७ ॥
ऋज्वाकृति यथा देवि जायतेऽतिमनोहरम् ।
संमुखं पञ्चशक्त्यग्रं प्रागूवक्त्रं चतुरग्निकम् ॥ ६८ ॥
बिन्दुत्रिकोणे वस्वारचक्रमेतद्वरानने ।
चक्रमध्यं तु जानीहि दशारयुगुलं तथा ॥ ६९ ॥
शक्रयोन्यङ्कितं देवि बाह्यमध्यगतं भवेत् ।
एतच्चक्रं महेशानि सर्वसौभाग्यवर्धनम् ॥ ७० ॥
सर्वसाम्राज्यदं देवि सर्वोपद्रवनाशनम् ।
अनेकरत्नमाणिक्यसुवर्णपरिपूरकम् ॥ ७१ ॥
महामोक्षप्रदं देवि वाग्विलासकरं महत् ।
एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसंनिभम् ॥ ७२ ॥
तद्युक्तं कुरु मीनाक्षि वसुपत्रं मनोहरम् ।
ततः षोडशपत्रं तु विलिखेत्सुरवन्दिते ॥ ७३ ॥
तद्बाह्ये देवदेवेशि त्रिवृत्तं मातृकान्वितम् ।
चतुरस्रं चतुर्द्वारसहितं परमेश्वरि ॥ ७४ ॥
चतुःषष्टियुताः कोट्यो योगिनीनां महौजसाम् ।
चक्रेऽस्मिन्संनिविष्टास्ताः साधकं मानयन्ति हि ॥ ७५
चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे ।
मुक्तामाणिक्यघटितं समस्थलविराजितम् ॥ ७६ ॥
त्रैलोक्यमोहनं नाम कल्पद्रुमफलप्रदम् ।
षोडशारं चन्द्रबिम्बरूपं तु सकलालयम् ॥ ७७ ॥
सर्वाशापूरकं भद्रे स्रवत्पीयूषवर्षणम् ।
अष्टपत्रं महेशानि जपाकुसुमसंनिभम् ॥ ७८ ॥
सर्वसंक्षोभणं नाम सर्वकामप्रपूरकम् ।
एतच्चयं महेशानि सृष्टिचक्रं सुखप्रदम् ॥ ७९ ॥

---

१ ख. °ने । मध्यचक्रं तु । २ ख. सर्वापद्बन्धना° । ३ ख. °कद्वयमा° । ४ ख. मा
५ ख. °स्मिन्सामविशेषास्ताः । ६ ख. °वर्धितम् ।

पूर्वाम्नायाधिदेव्या तु मण्डितं सर्वसिद्धिदम् ।
चतुर्दशारं देवेशि दाडिमीकुसुमप्रभम् ॥ ८० ॥
अनन्तफलदं भद्रे सर्वसौभाग्यसंप्रदम् ।
दशारं तप्तहेमाभं सिन्दूरसदृशं प्रिये ॥ ८१ ॥
सर्वार्थसाधकं चक्रं मनश्चिन्तितदं सदा ।
द्वितीयमपि पङ्क्त्यस्रं जपाकुसुमसंनिभम् ॥ ८२ ॥
सर्वरक्षाकरं चक्रं महाज्ञानमयं शिवे ।
एतत्त्रयं महेशानि स्थितिचक्रं सुखप्रदम् ॥ ८३ ॥
दक्षिणाम्नायपूज्यं तु यथेप्सितफलप्रदम् ।
अष्टकोणं वरारोहे बालार्ककिरणारुणम् ॥ ८४ ॥
पद्मरागसमप्रख्यं सर्वरोगहरं सदा ।
उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ॥ ८५ ॥
सर्वसिद्धिप्रदं चक्रं सकलालयमीश्वरि ।
त्रिकोणं सर्वसंभूतिकारणं भूतिदं सदा ॥ ८६ ॥
बिन्दुचक्रं वरारोहे सर्वानन्दमयं परम् ।
सदाशिवमयं चक्रनायकं परमेश्वरि ॥ ८७ ॥
एतच्चक्रं तु संहाररूपं ब्रह्ममयं सदा ।
पश्चिमाम्नायसंसेव्यं त्रयमुत्तरसेवितम् ॥ ८८ ॥
अस्मिंश्चक्रे षडध्वानो वर्तन्ते वीरवन्दिते ।
चक्रपत्रेषु देवेशि पदाध्वा तु निगद्यते ॥ ८९ ॥
चक्रात्रिसंधिभागेषु भुवनाध्वा व्यवस्थितः ।
वर्णाध्वा मातृकारूपी कथयामि तवानघे ॥ ९० ॥
वर्गाष्टकं मातृकाया दिक्षु सिद्धं यतः क्रमात् ।
पार्थिवं तन्मयं विद्धि षोडशारं कलात्मकम् ॥ ९१ ॥
अष्टपत्रं कादिवर्णैः क्षान्तैर्दिक्षु विदिक्षु च ।
कादिढान्ताः शक्रवर्णाः शक्रकोणेषु संस्थिताः ॥ ९२ ॥
णकारादिभकारान्ता दशवर्णा दशारके ।
मकारादिशकारान्ता द्वितीयेऽपि दशारके ॥ ९३ ॥
वर्णाष्टकं चाष्टकोणे त्रिकोणे कथयामि ते ।
अकथादित्रिकोणान्तं हक्षयुग्मं तु मध्यगम् ॥ ९४ ॥

१ ख. सिद्धीर्यतः प्रिये । पा° । २ क. °लालक° । ३ ख. °वर्गैः । ४ क. °दिक्षका° ।

वर्णाध्वा कथितो देवि मातृकापीठरूपकः ।
षट्त्रिंशत्तत्त्वभरितं चक्रं मूलानुसारतः ॥ ९५ ॥
तत्त्वाध्वा कथितो देवि तत्त्वरूपो वरानने ।
पञ्चसिंहासनोन्नद्धक*लाध्वा चक्रशासनात् ॥ ९६
सबाला भैरवीयुक्ता महात्रिपुरसुन्दरी ।
त्रिपुरा ज्यम्बिकान्ताढ्या चक्रं प्राप्य विजृम्भते ॥
मन्त्राध्वाऽयं समाख्यातो निश्चयेन सदाऽनघे ।
+ एवं षडध्वविमलं श्रीचक्रं परिचिन्तयेत् ॥ ९८ ॥
उत्तराशामुखो देवि यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशैव निगद्यते ॥ ९९ ॥
ईशानकोणं देवेशि तदाऽऽग्नेयं न संशयः ।
पश्चिमादिङ्मुखो मन्त्री यदा चक्रं समुद्धरेत् ॥ १०
पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ।
वायुकोणं तदाग्नेयमैशानं राक्षसं भवेत् ॥ १०१ ॥
दक्षिणाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ।
पूर्वाशैव तदा सा दिग्रक्षःकोणं तु वह्निवत् ॥ १०२
एतच्चक्रं मेरुरूपं श्रीविद्यार्णैः समुद्धृतम् ।
सर्वागममयं देवि कथितं वीरवन्दिते ॥ १०३ ॥
इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे दशमः पटलः ॥ १० ॥

---

अथैकादशः पटलः ।

---

ईश्वर उवाच—
एभिर्वर्णैस्तु देवेशि त्रिपुरा कथ्यतेऽधुना ।
नवाक्षरो महामेरुरयं ब्रह्माण्डगोलकः ॥ १ ॥
चतुरस्रं च कोदण्डं त्रिकोणं तत्पुटं मुखम् ।
निरालम्बं तवाऽऽख्यातमेतद्ब्रह्माण्डमण्डलम् ॥ २

---

* ख. पुस्तके निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता, एतत्कलापञ्चक
पुस्तके—क्रमस्त्वन्यत्रेत्थम्—कलाध्वा, तत्त्वाध्वा, भुवनाध्वा, वर्णाध्वा, पदाध्वा, मन्त्र
तु यथायथं स्थानविशेषानुगुणः क्रमो द्रष्टव्यः ।

---

१ ख. °नुरूपतः । २ क. ग. °रूपं व° । ३ क. ग. °श्चलेन ।

लकारश्चतुरस्रं स्यात्पृथ्वीबीजतया प्रिये ।
अर्धमात्रा तु कोदण्डं स्रवत्पीयूषवर्षिणी ॥ ३ ॥
त्रिकोणरूपी वह्निः स्यात्त्रिकोणत्वात्परा शिवा ।
एकारश्च रकारश्च ईकारश्च त्रयं भवेत् ॥ ४ ॥
मायाविकाररूपेण षट्कोणाश्रयरूपिणी ।
हकारो व्योमरूपत्वाद्बिन्दुश्च मुखमण्डले ॥ ५ ॥
ईच्छारूपेण कामस्तु सर्वत्र परमेश्वरि ।
तस्मान्मादनमाख्यातमेतद्वै मेरुमण्डलम् ॥ ६ ॥
शृणु देवि प्रवक्ष्यामि बीजं कामेश्वरीमतम् ।
सकला भुवनेशानि कामेशीबीजमुत्तमम् ॥ ७ ॥
अनेन सकला विद्याः कथयामि विशेषतः ।
शक्त्यर्णस्तुर्यवर्णोऽयं कलमध्ये सुलोचने ॥ ८ ॥
वाग्भवं पञ्चवर्णं तु कामराजमथोच्यते ।
मादनं शिवचन्द्राद्यं शिवान्तं मीनलोचने ॥ ९ ॥
कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम् ।
शक्तिबीजं वरारोहे चन्द्राद्यं सर्वसिद्धिदम् ॥ १० ॥
चतुरक्षररूपं तु त्र्यक्षरी त्रिपुरा परा ।
सर्वतीर्थमयी देवि सर्वदेवस्वरूपिणी ॥ ११ ॥
सर्वशास्त्रमयी विद्या सर्वयोगमयी परा ।
सर्वयज्ञमयी संवित्सर्वज्ञानस्वरूपिणी ॥ १२ ॥
सर्वदेवमयी साक्षात्सर्वसौभाग्यसुन्दरी ।
एनामुपास्य देवेशि कामः सर्वाङ्गसुन्दरः ॥ १३ ॥
कामराजो भवेद्देवि नित्येयं ब्रह्मरूपिणी ॥ १४ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे एकादशः पटलः ॥ ११ ॥

---

## अथ द्वादशः पटलः ।

---

श्रीदेव्युवाच—

एतस्या देवदेवेश भेदान्कथय सुन्दर ।
केन केनोपासितेयं विशदी कुरु तत्त्वतः ॥ १ ॥

---

१ ख. °जभवं प्रि° । २ ख. °श्च सका° । ३ ख. °क्त्यन्तरस्तु° ।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि लोपामुद्राभिधां वराम् ।
कामराजाख्यविद्यायाः शक्तिं तुर्यां च सुन्दरि ॥ २
हित्वा मुखे शिवेन्द्राढ्या लोपामुद्रा प्रकाशिता ।
अगस्त्योपासिता विद्या त्रैलोक्यक्षोभकारिणी ॥ ३
एषा विद्या कामराजपूजितैव न संशयः ।
विद्याद्वयमिदं मन्त्रे दुर्लभं भुवनत्रये ॥ ४ ॥
कामराजाख्यविद्याया वाग्भवेन वरानने ।
विद्योद्धारं प्रवक्ष्यामि शक्तिमादनमध्यगम् ॥ ५ ॥
शिवं कुर्याद्वाग्भवे तु शिवाद्यं कामराजकम् ।
चन्द्राद्यं तु तृतीयं स्याद्विद्येयं मनुपूजिता ॥ ६ ॥
सहाद्यं वाग्भवं देवि चन्द्राद्यं शिवमध्यगम् ।
मादनं कामराजे तु शक्तिबीजं सहाननम् ॥ ७ ॥
चन्द्राराधितविद्येयं भोगमोक्षफलप्रदा ।
हसाद्यं वाग्भवं विद्धि शिवाद्यं सहमध्यगम् ॥ ८ ॥
मादनं कामराजे तु तार्तीयं शृणु पार्वति ।
हसाद्यं शक्तिबीजं तु कुबेरेण प्रपूजिता ॥ ९ ॥
कामराजाख्यविद्यायास्तार्तीयं सुरवन्दिते ।
शक्तिबीजं सहाद्यं स्याद्विद्याऽगस्त्यप्रपूजिता ॥ १०
लोपामुद्रा प्रभावेन साक्षाद्ब्रह्मस्वरूपिणी ।
कामराजाख्यविद्याया वाग्भवे मादनं त्यज ॥ ११
चन्द्रं तत्रैव संयोज्य कामराजे ततः परम् ।
हित्वा चन्द्रं मुखे कुर्याद्विद्येयं नन्दिपूजिता ॥ १२ ॥
कामराजाख्यविद्याया हित्वा भूमिं तृतीयके ।
शक्तिकण्ठे स्थितां देवि चन्द्राधः कुरु तत्र च ॥ १३
इन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा ।
लोपामुद्राख्यविद्याया द्वितीयाया महेश्वरि ॥ १४ ॥
कामराजे भृगुं हित्वा तार्तीये शक्रगः शिवः ।
एषा विद्या वरारोहे त्रिपुरा सूर्यपूजिता ॥ १५ ॥

---

१ ख. पराम् । २ क. ग. 'जं हसान°' । ३ ख. °त्रिकूटे स्थि° । ४ ख. °ये सकगः शि

शृणु देवि प्रवक्ष्यामि चतुष्कूटां च शांकरीम् ।
लोपामुद्रां द्वितीयां तु विलिख्य सुरवन्दिते ॥ १६ ॥
पुनर्विलिख्यतामेव चतुर्थे पञ्चमे स्थिताम् ।
हित्वा तु भुवनेशानीमेकोच्चारेण चोच्चरेत् ॥ १७ ॥
चतुष्कूटा महाविद्या शंकरेण प्रपूजिता ।
लोपामुद्रां पुनर्देवि विलिख्य तदनन्तरम् ॥ १८ ॥
नन्दिकेश्वरविद्यां च षट्कूटा वैष्णवी भवेत् ।
दुर्वाससा पुरा देवी निष्करा[निष्कूटा] पूजिता परा॥१९॥
कामराजाख्यविद्यायास्त्रिकूटेषु वरानने ।
या स्थिता भुवनेशानि द्विधा कुरु महेश्वरि ॥ २० ॥
बिन्दुहीना नादहीना दुर्वासःपूजिता भवेत् ।
एतैर्द्वादशसंख्याकैर्मन्त्रैस्तु सुरवन्दिते ॥ २१ ॥
द्वादशान्ता स्थिता देवि परब्रह्मस्वरूपिणी ।
राज्ञीयं सर्वविद्यानां सर्वाम्नायैस्तु सेविता ॥ २२ ॥
सर्वागममहामन्त्रवन्दिता देववन्दिता ।
सर्वयोगैर्नता नित्या केवलं ब्रह्मरूपिणी ॥ २३ ॥
एवं त्रिधा महाविद्या विद्या त्रिपुरसुन्दरी ।
इयमेव महादेवी त्रिकूटा परमेश्वरी ॥ २४ ॥
वक्तुं न शक्यते सर्वैर्ब्रह्मविष्ण्वादिभिः सदा ।
नो वाचा मनसा बुद्ध्या तुर्या वक्तुं न शक्यते ॥ २५ ॥
साक्षाद्ब्रह्ममयी देवी षोडशार्णस्वरूपिणी ।
मनसैव महेशानि स्मृत्वाऽहं तु सदाशिवः ॥ २६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरसुन्दरी ( विद्याविवरणं नाम )
द्वादशः पटलः ॥ १२ ॥

---

अथ त्रयोदशः पटलः ।

---

श्रीदेव्युवाच—

परब्रह्मतया साक्षाच्छ्रीविद्या षोडशाक्षरी ।
कथय त्वं महादेव यद्यहं तव वल्लभा ॥ १ ॥

---

१ क. °त्रिधा ।

त्रिकूटाः कथिताः सर्वाश्चतुष्कूटा च शांकरी ।
षट्कूटा वैष्णवी चैव मनवः कथिता विभो ॥ २ ॥
एतास्तु सकला विद्यास्त्रिविधास्तु श्रुता मया ।
इदानीं श्रोतुमिच्छामि श्रीविद्यां षोडशाक्षरीम् ॥ ३ ॥

ईश्वर उवाच—

शठत्वेन वरारोहे श्रीविद्यामन्त्रविद्बुधः ।
योगिनीनां भवेद्भक्ष्यः श्रीगुरोः शासनात्प्रिये ॥ ४ ॥
षोडशार्णां महाविद्यां न दद्यात्कस्यचित्प्रिये ।
राज्ञे राज्यप्रदायापि पुत्राय प्राणदाय वा ॥ ५ ॥
देयं तु सकलं भद्रे साम्राज्यमपि पार्वति ।
शिरोऽपि प्राणसहितं न देया षोडशाक्षरी ॥ ६ ॥
उच्चार्यमाणा ये मन्त्रास्ते सर्वे वाचिकाः प्रिये ।
उच्चाररहितं वस्तु श्रीविद्या षोडशाक्षरी ॥ ७ ॥
सवर्णोऽपि वरारोहे वस्तु साक्षान्निरक्षरम् ।
भृङ्गोपभुक्तपुष्पं तु शिवे योग्यं यथा भवेत् ॥ ८ ॥
तथा निरक्षरं वस्तु ह्यक्षरैरपि संयुतम् ।
उदके लिखितं यद्वन्मन्त्रोच्चारस्तथा भवेत् ॥ ९ ॥
भोगमोक्षप्रदा विद्या श्रीविद्या षोडशाक्षरी ।
विना गुरूपदेशेन शापो भवति निश्चयात् ॥ १० ॥
चन्द्रान्तं वारुणान्तं च शक्रादिसहितं पृथक् ।
वामाक्षि बिन्दुनादाढ्यं विश्वमातृकलात्मकम् ॥ ११ ॥
चतुर्विधप्रकारेण शृणु देवि प्रकथ्यते ।
त्वं मनोहारिणी यस्मात्कथ्यते भुवि दुर्लभम् ॥ १२ ॥
विद्यादौ योजयेद्देवि साक्षाज्जाग्रत्स्वरूपिणी ।
उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा ॥ १३ ॥
कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम् ।
जाग्रत्सत्त्वगुणा प्रोक्ता केवलं शक्तिरूपिणी ॥ १४ ॥
त्रिकूटा सकला भेदाः पञ्चकूटा भवन्ति हि ।
वैष्णवी वसुकूटा स्यात्षट्कूटा शांकरी भवेत् ॥ १५ ॥
द्वितीयोऽयं प्रकारः स्याद्दुर्लभो भुवनत्रये ।
एषैव शिवरूपा तु व्यापकत्वात्सुरेश्वरि ॥ १६ ॥

निश्चला सर्वभूतेषु सदाशिवमयी परा ।
सुषुप्तिरूपिणी साक्षाद्ब्रह्मरूपा यतः प्रिये ॥ १७ ॥
मरणं विस्मृतिर्मूर्छा निद्रा च तमसा वृता ।
सुषुप्तिस्तु कला ज्ञेया सुषुप्तिः शिवरूपिणी ॥ १८ ॥
केवलत्वेन जाग्रत्स्यात्पञ्चकूटा च शांभवी ।
सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ॥ १९ ॥
अभिलाषो भ्रमश्चिन्ता विषयेषु पुनः स्मृतिः ।
कलाचतुष्टयं स्वप्नावस्थायां तु विधीयते ॥ २० ॥
शिवरूपा शक्तिरूपा महात्रिपुरदेवता ।
वेदादिमण्डिता देवि शिवशक्तिमयी सदा ॥ २१ ॥
तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरि ।
वैष्णवी नवकूटा स्यात्सप्तकूटा च शांकरी ॥ २२ ॥
अस्याः स्मरणमात्रेण गजदानं शतं भवेत् ।
भेदत्रयं तु कथितं तुर्यां विद्यां शृणु प्रिये ॥ २३ ॥
यस्या विज्ञानमात्रेण ब्रह्म साक्षान्न संशयः ।
सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ॥ २४ ॥
अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ।
भावाभावविनिर्मुक्ता गुणातीता निगद्यते ॥ २५ ॥
वैराग्यं च मुमुक्षुत्वं[1] शमादि विमलं मनः ।
सदसद्वस्तुनिर्धारस्तुर्यायास्तु कला इमाः ॥ २६ ॥
आद्यबीजद्वयं भद्रे विपरीतक्रमेण हि ।
विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत् ॥ २७ ॥
अन्तर्मुखा वरारोहे कुमारी त्रिपुरेश्वरी ।
एभिस्तु पञ्चसंख्याकैर्बीजैः संपुटितां यजेत् ॥ २८ ॥
षट्कूटां परमेशानि विद्येयं षोडशाक्षरी ।
त्रिकूटाः सकला भद्रे षोडशार्णा भवन्ति हि ॥ २९ ॥
वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी ।
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ॥ ३० ॥
वर्णितुं नैव शक्येयं श्रीविद्या षोडशाक्षरी ।
वैखरी वाच्यभावत्वादशक्ता गुणवर्णने ॥ ३१ ॥

---

१ क. °त्वं समाधिवि° ।

यतो निरक्षरं वस्तु परा तत्र तु कारणम् ।
मूकीभूता हि पश्यन्ति मध्यमा मध्यमा भवेत् ॥ ३२
ब्रह्मविद्यास्वरूपेण भुक्तिमुक्तिफलप्रदा ।
एकोच्चारेण देवेशि वाजपेयस्य कोटयः ॥ ३३ ॥
अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा ।
काश्यादितीर्थयात्राश्च सार्धकोटित्रयान्विताः ॥ ३४
तुलां नार्हन्ति देवेशि नात्र कार्या विचारणा ।
एकोच्चारेण गिरिजे किं पुनर्ब्रह्म केवलम् ॥ ३५ ॥
षोडशार्णा महाविद्या न प्रकाश्या कदाचन ।
गोपितव्या त्वया भद्रे स्वयोनिरिव पार्वति ॥ ३६ ॥
शिवशक्तिसमायोगाद्यद्यत्कर्म प्रजायते ।
वेद्यं तत्र भवेत्तद्वच्छ्रीविद्यां षोडशाक्षरीम् ॥ ३७ ॥
विना गुरूपदेशेन श्रीविद्या षोडशाक्षरी ।
दृष्ट्वा प्रजपते यस्तु स भक्ष्यो योगिनीगणैः ॥ ३८ ॥
श्रीगुरोः कृपया लब्धा सर्वसाम्राज्यदायिनी ।
भुवनत्रयसौभाग्यं ददाति विपुलां श्रियम् ॥ ३९ ॥
साक्षान्मदनसौभाग्यं त्रैलोक्याकर्षणक्षमम् ।
सुधातरङ्गिणीक्षेमशब्दचातुर्यदायिनी ॥ ४० ॥
सौभाग्यभाग्यसंपन्नकलापटलदायिनी ।
परब्रह्मणि लीनत्वं ददाति यश उत्तमम् ॥ ४१ ॥
प्रपञ्चसागरे लीनानुद्धरेद्वेदमातृका ।
यस्याः सामर्थ्यतो देवि भुवनानि चतुर्दश ॥ ४२ ॥
अभूवन्परमेशानि तेषां कारणरूपिणी ।
चतुःसागरसामर्थ्यं कृपालोकनतो भवेत् ॥ ४३ ॥
ब्रह्माण्डकोटिजननी महामोक्षप्रदायिनी ।
निःसरन्ति महामन्त्रा विस्फुलिङ्गा यथा प्रिये ॥ ४
वह्नेः सकाशाद्बहवो विद्यास्तु बहवस्तथा ।
वाग्भवात्तु समुत्पन्नास्तस्माद्वाग्भवमुच्यते ॥ ४५ ॥
मातृकाणां तथा भद्रे वाग्भवान्निसृताः क्रमात् ।
अत एव महेशानि शब्दब्रह्ममयी प्रिये ॥ ४६ ॥

---

१ ख. °स्त्वयाऽपि भु° । २ ख. °न्मदेन्द्रसौ° ।

पालयन्ती जगत्सर्वं तथा त्रैलोक्यमोहिनी ।
मोहयन्ती कामकला पुत्रपौत्रप्रवर्धिनी ॥ ४७ ॥
स्त्रीपुंभावेन सकलं ग्रथितं कामसूत्रके ।
तदा[1] सौभाग्यसंपन्ना ब्रह्मस्थाननिवासिनी ॥ ४८ ॥
सौभाग्य[2]गर्वगहना विश्वयोनिरितीरिता ।
चतुर्वाङ्मयनिष्ठयं त्रैलोक्यवशकारिणी ॥ ४९ ॥
साक्षात्संविन्मयी ज्ञानरूपिणी भोगदायिनी ।
महासंपत्प्रदा नित्या साक्षादक्षररूपिणी ॥ ५० ॥
षोडशार्णा मया भद्रे श्रीविद्या कथिता परा ।
निधानमिव चोरेभ्यो रक्षणीया तथा प्रिये ॥ ५१
न देया यस्य कस्यापि देया प्राणप्रदायिने ।
निर्मलाय स्वभक्ताय प्राणेभ्योऽप्यधिकाय च ॥ ५२ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे षोडशीविद्याविवरणं नाम त्रयोदशः पटलः ॥ १३ ॥

---

अथ चतुर्दशः पटलः ।

---

श्रीदेव्युवाच—

चक्रमण्डलमाख्यातं न पूजा तत्र मण्डले ।
कथिता परमेशान श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि पूजाविधिमनुत्तमम् ।
तदङ्गकलशादीनां स्थापनं प्रथमं भवेत् ॥ २ ॥
तद्विधानं शृणु प्राज्ञे यथाविधि समासतः ।
मण्डलं वामतः कृत्वा जलेन चतुरस्रकम् ॥ ३ ॥
वहत्कराभ्यां देवेशि तत्राऽऽधारं मनोहरम् ।
सौवर्णरौप्यताम्रादिरचितं पूजयेत्प्रिये ॥ ४ ॥
वह्निमण्डलरूपं तु कलादशकमर्चयेत् ।
धूम्रा च नीलवर्णा च कपिला विस्फुलिङ्गिनी ॥ ५ ॥
ज्वाला[3] हैमवती कव्यवाहिनी हव्यवाहिनी ।
रौद्री संकर्षिणी चैव वैश्वानरकला दश ॥ ६ ॥

---

१ ख. सदा । २ ख. °ग्यवर्गग° । ३ ख. °ला हेमावती ।

आभिः कलाभिः सहितं वह्निं तत्र प्रपूजयेत् ।
कलशं हेमजं वाऽन्यं स्थापयेत्तत्र सुन्दरि ॥ ७ ॥
पूजयेत्सूर्यरूपं तु कलाभिः परमेश्वरि ।
तपिनी तापिनी चैव विबुधा बोधिनी तथा ॥ ८ ॥
कलिनी शोषणी चैवं वारुण्याकर्षिणी तथा ।
माया विश्वावती हेमा प्रभा सौरकला इमाः ॥ ९ ॥
कलशं तु समापूर्य जलेन कमलेक्षणे ।
तत्रस्थममृतं साक्षाच्चन्द्ररूपं विचिन्तयेत् ॥ १० ॥
चन्द्रमण्डलमभ्यर्च्य कलाभिः सुरवन्दिते ।
अमृता मानसी तुष्टिः पुष्टिः प्रीती रतिस्तथा ॥ ११ ॥
श्रीश्च ह्रीश्च स्वधा रात्रिर्ज्योत्स्ना हैमवती तथा ।
छाया च पूर्णिमा नित्या अमावास्या च षोडशी ॥ १[२ ॥]
एभिः समभ्यर्च्य मन्त्रैर्यजेदानन्दभैरवम् ।
शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः ॥ १३ ॥
वायुश्च वामकर्णेन योजितो बिन्दुलाञ्छितः ।
बीजमेतत्समुच्चार्य तथा चाऽऽनन्दभैरवम् ॥ १४ ॥
ङेन्तं शिखामन्त्रयुक्तं पुनर्बीजं तु संलिखेत् ।
चन्द्रं हित्वाऽऽदिमं कुर्यात्कर्णे वामाक्षि योजयेत् ॥ १[५ ॥]
सुरादेव्यै ततो वौषडियमानन्दभैरवी ।
अनेन चन्द्रं संपूज्य पूजार्हः कलशो भवेत् ॥ १६ ॥
विधाय वामभागे तु चतुरस्रं तु मण्डलम् ।
यन्त्रिकां तत्र संस्थाप्य शङ्खं तत्र विनिक्षिपेत् ॥ १७ [॥]
शुद्धोदकेन संपूर्य पूजयेत्कारणान्वितम् ।
षडङ्गं तत्र संपूज्य सामान्यार्घ्यमिदं प्रिये ॥ १८ ॥
अथ वक्ष्ये महेशानि विशेषार्घ्यस्य लक्षणम् ।
आत्मश्रीचक्रयोर्मध्ये चतुरस्रं तु मण्डलम् ॥ १९ ॥
सामान्यार्घ्यस्य तोयेन देशिको भूमिजानुकः ।
वहत्करोर्ध्वपुटतो यन्त्रिकां तत्र योजयेत् ॥ २० ॥

---

१ ख. पं तं क° । २ ख. °व वरेण्या कर्षणी । ३ क. °थं विशेषेण वरानने । त° । [४ ...]
°त्स्ना हेमाव° । ५ क. ग. शिवाम° । ६ ख. सुधा । ७ ख. °येत्तत्कलान्वि° ।

त्रिकोणवृत्तषट्कोणं चतुरस्रं तु मण्डलम् ।
वह्निं तत्र विचिन्त्याथ पूजयेद्यन्त्रिकामयम् ॥ २१ ॥
पूर्ववत्परमेशानि त्रिकूटां मध्यगां यजेत् ।
व्यस्तकूटैर्यजेत्तत्र त्रिकोणे परमेश्वरि ॥ २२ ॥
द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
सौवर्णं राजतं वाऽपि पात्रं संस्थापयेत्प्रिये ॥ २३ ॥
सूर्यरूपं प्रपूज्याथ यन्त्रं पूर्ववदालिखेत् ।
समस्तव्यस्तकूटैस्तु पूजयेत्पूर्ववत्क्रमात् ॥ २४ ॥
विशेषेण समापूर्य चन्द्रं द्रवमयं प्रिये ।
पूर्ववद्यन्त्रमालिख्य त्रिकूटां यन्त्रमध्यगाम् ॥ २५ ॥
त्रिकोणं चिन्तयेत्तत्तु त्रिकूटैः पूजितं प्रिये ।
अकथादित्रिरेखाढ्यं हक्षाभ्यन्तरमुत्तमम् ॥ २६ ॥
द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
आत्मानं हंसमनुना आनन्देन च पूजयेत् ॥ २७ ॥
मूलविद्यां यजेत्तत्र षोडशार्णां जपेत्ततः ।
धूपदीपौ निवेद्याथ नमस्कृत्यार्घ्यकं बुधः ॥ २८ ॥
मुद्राः संदर्शयेत्तत्र साक्षाद्ब्रह्ममयं भवेत् ।
प्रोक्षयेत्तेन चाऽऽत्मानं पूजोपकरणानि च ॥ २९ ॥
सर्वत्र प्रोक्षणं कुर्यात्सर्वं ब्रह्ममयं भवेत् ।
आत्मानं तु समभ्यर्च्य भूतान्संत्रासयेत्ततः ॥ ३० ॥
मूलविद्यास्त्रमुच्चार्य दिग्बन्धं स्फोटनादिभिः ।
तन्मुखः संनतो देवि भूतशुद्धिं तु पूर्ववत् ॥ ३१ ॥
ततो न्यासादिकं कुर्यात्संनाहं तु शरीरके ।
करशुद्धिकरीं विद्यां मध्यमादितलान्तकम् ॥ ३२ ॥
अङ्गुलीषु द्विरावृत्त्या करशुद्धिरियं प्रिये ।
अंत आत्मासनं दद्यात्तत्तश्चक्रासनं प्रिये ॥ ३३ ॥

---

१ ख. °णं यजेत्तत्र तु । २ क. ग. °कोणं प° । ३ ख. °पं पूर्वबुद्ध्या य° । ४ ख. पुस्तके जलेन च स° इति पाठान्तरम् । ५ ख. चन्द्रद्र° । ६ ख. पुस्तके 'मये शुभे । पू' इति पाठान्तरम् । ७ ख. यजम° । ८ ख. °दिसुवर्णाढ्यं । ९ ख. 'त्मानन्दं स° । १० क. ग. उन्मु° । ११ क. ग. °खः स ततो । १२ ख. अथ ।

सर्वमन्त्रासनं दद्यात्साध्यसिद्धासनं यजेत् ।
पादयोर्जङ्घयोर्जान्वोर्लिङ्गे न्यस्य चतुष्टयम् ॥ ३४
कुमार्यास्त्रिपुरेशान्याः षडङ्गानि च पूर्ववत् ।
अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम् ॥ ३५ ॥
संपूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ।
स्रवत्सुधां षोडशार्णां महासौभाग्यदां स्मरेत् ॥ ३६
वामांसदेशे सौभाग्यदण्डिनीं भ्रामयेत्ततः ।
रिपुजिह्वाग्रहां मुद्रां पादमूले न्यसेत्प्रिये ॥ ३७ ॥
त्रैलोक्यस्य त्वहं कर्ता ध्यात्वैवं तिलके न्यसेत् ।
संपूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ॥ ३८ ॥
पुनः संपूर्णया देहे गलोर्ध्वे विन्यसेत्ततः ।
पुनः संपूर्णया देहे व्यापकत्वेन विन्यसेत् ॥ ३९ ॥
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य च ।
श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः ॥ ४० ॥
परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये ।
ब्रह्मरन्ध्रे क्षिपेद्देवि मणिबन्धे न्यसेत्ततः ॥ ४१ ॥
ललाटेऽनामिकां कुर्यात्षोडशार्णां स्मरन्बुधः ।
संमोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः ॥ ४२
त्रैलोक्यमरुणं ध्यायेच्छ्रीविद्यां मनसि स्मरेत् ।
पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि पृष्ठके ॥ ४३ ॥
नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ।
कर्णयोर्ब्रह्मरन्ध्रे च वदनेऽक्षिणि पार्वति ॥ ४४ ॥
ततः कण्ठप्रदेशे तु करवेष्टनयोः क्रमात् ।
संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात् ॥ ४
श्रीविद्यायाः षोडशार्णैर्न्यासैर्विश्वेश्वरो भवेत् ।
सृष्ट्यन्तां विन्यसेद्देवि मातृकां पूर्ववत्प्रिये ॥ ४६ ॥
मातृकार्णस्वरूपां च वर्गाष्टकसमन्विताम् ।
वशिनीं मातृकां न्यस्येद्बीजाष्टकसमन्विताम् ॥ ४७ ॥

---

१ ख. °लोर्ध्वे न्यस्य साधकः । पु° । २ ख. °दने भुवि पा° । ३ क. ग. कर्णप्रदेशे
४ ख. °ष्टयर्थे वि° ।

अवर्गान्ते लिखेद्बीजं वह्निफान्तं क्षमान्वितम् ।
वामकर्णविशोभाढ्यं बिन्दुनादाङ्कितं प्रिये ॥ ४८ ॥
वशिनीं पूजयेद्वाचां देवतां देवि सुव्रते ।
कवर्गान्ते महेशानि कामेशीबीजमुत्तमम् ॥ ४९ ॥
मेरूद्धृतं समुच्चार्य वाग्देवीं पूजयेत्ततः ।
चवर्गान्ते धान्तलान्तं क्षमातुर्यस्वरान्वितम् ॥ ५० ॥
मोदिनीं पूजयेद्वाचां देवतां तदनन्तरम् ।
टवर्गान्ते वायुतोयं मुखसंस्थं महेश्वरि ॥ ५१ ॥
वामकर्णेन्दुबिन्द्वाढ्यं विमलां वागधीश्वरीम् ।
तवर्गान्ते जमक्षमाद्यं वामनेत्रविभूषितम् ॥ ५२ ॥
बिन्दुनादाङ्कितं बीजं वाग्देवीमरुणां यजेत् ।
पवर्गान्ते व्योमचन्द्रं क्षमातोयाग्निमुख्यकम् ॥ ५३ ॥
ऊकारस्वरसंयुक्तं बिन्दुनादकलाङ्कितम् ।
जयिनीं पूजयेद्वाचां देवतां वीरवन्दिते ॥ ५४ ॥
यवर्गान्ते जान्तकालरेफवायुसमन्वितम् ।
ऊमाढ्यं देवतां वाचां सर्वेशीं परिपूजयेत् ॥ ५५ ॥
क्षमोवह्निगतं तुर्यं बीजेन परिमण्डितम् ।
बिन्दुनादकलाक्रान्तं कौलिनीं वाचमर्चयेत् ॥ ५६ ॥
शवर्गान्ते महेशानि न्यसेत्सर्वार्थसिद्धये ।
शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ॥ ५७ ॥
आधारे व्यूहकं यावन्न्यसेद्देवीः क्रमात्प्रिये ।
षोढा न्यासं ततः कुर्याद्येन ब्रह्माण्डरूपकः ॥ ५८ ॥
विराट्स्वरूपी वर्णात्मा शिवः साक्षान्न संशयः ।
गणेशः प्रथमो न्यासः सर्वविघ्नविनाशनः ॥ ५९ ॥
अरुणादित्यसंकाशान्गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिकराञ्शक्तिसमन्वितान् ॥ ६० ॥
ध्यात्वा प्रविन्यसेद्देवि मातृकान्यासवत्ततः ।
विघ्नेश्वरस्तथा श्रीश्च विघ्नराजस्तथा ह्रिया ॥ ६१ ॥
विनायकस्तथा तुष्टिः शान्तियुक्तः शिवोत्तमः ।
विघ्नकृत्पुष्टियुक्तस्तु विघ्नहृच्च सरस्वती ॥ ६२ ॥

---

१ ख. °न्तनीरक्ष° । २ क. °देवी क्र° ३ ख. °न् । एतांस्तु वि° ।

७

विघ्नराड्रतियुक्तस्तु मेधावान्गणनायकः ।
एकदन्तश्च कान्तिश्च द्विदन्तः कामिनीयुतः ॥ ६३ ॥
गजवक्त्रो मोहिनी च निरञ्जनजटा ततः ।
कपर्दी तु तथा तीव्रा दीर्घवक्त्रस्ततः प्रिये ॥ ६४ ॥
ज्वालिनीसहितः पश्चान्नन्दासंकर्षणौ ततः ।
वृषध्वजश्च शुभगा गणनाथेन संयुता ॥ ६५ ॥
कामरूपिणिका पश्चाद्गजेन्द्रः शुभ्रया युतः ।
शूर्पकर्णस्तु जयिनी त्रिनेत्रः सत्ययाऽन्वितः ॥ ६६ ॥
लम्बोदरश्च विघ्नेशी महानादस्वरूपिणी ।
चतुर्मूर्तिः कामदा च सदाशिवयुता ततः ॥ ६७ ॥
मदविह्वलनाम्नी च आमादाविकटे ततः ।
दुर्मुखश्च तथा घूर्णा सुमुखो भूतिमांस्ततः ॥ ६८ ॥
प्रमोदश्च तथा भूमीरेकपादस्तथा सती ।
द्विजिह्वश्च रमायुक्तः शूरश्चैव तु मानुषी ॥ ६९ ॥
वीरेण सहिता पश्चाच्छैलजे मकरध्वजः ।
षण्मुखश्च विकर्णा च वरदो भृकुटी तथा ॥ ७० ॥
वामदेवस्तथा लज्जा वक्रतुण्डस्ततः परम् ।
दीर्घघोणान्वितः पश्चाद्विरण्डकधनुर्धरा ॥ ७१ ॥
सेनानीर्यामिनीयुक्तो ग्रामणी रात्रिसंयुतः ।
मत्तश्च चण्डिकायुक्तो विमत्तश्च शशिप्रभा ॥ ७२ ॥
मत्तवाहनलोले च जटी च चपलेक्षणा ।
मुण्डि ऋज्वीयुतः पश्चात्खड्गी दुर्भगयाऽन्वितः ॥ ७३ ॥
वरेण्यश्चैव सुभगा वृषकेतुस्तथा शिवा ।
भक्ष्यप्रियश्च दुर्गा च मेघनादश्च कालिका ॥ ७४ ॥
गणेशः कालकुब्जा च गणपो विघ्नहारिणी ।
मातृवर्णैर्न्यसेद्देवि ग्रहन्यासं ततो न्यसेत् ॥ ७५ ॥
पद्मरागं सित रक्तं श्यामं पीतं च पाण्डुरम् ।
धूम्रकृष्णं कृष्णधूम्रं धूम्रधूम्रं विचिन्तयेत् ॥ ७६ ॥

---

१ क. ग. °धा च गण°। २ ख. °नीगतिः । ३ ख. °जटे त° । ४ ख. °सुरसा । ५ ख. पुस्तके सूर्यकोटिस्तु इति पाठान्तरम् । ६ क. ग. °ध्वजा । ष° । ७ ख. °कुटीयुता । वा° । ८ ख. °धरे । ते° । ९ ख. मुण्डी ह्रदीयु° । १० क. ग. °न्यासस्ततो भवेत् । ११ ख. रक्तं श्वेतं त° ।

रविमुख्यान्कामरूपान्सर्वाभरणभूषितान् ।
वामोरुन्यस्तहस्तांश्च दक्षहस्ताभयप्रदान् ॥ ७७ ॥
स्वरैरर्कं हृदि न्यस्य यवर्गेण शशी ततः ।
भ्रूमध्येऽथ कवर्गेण भौमं नेत्रत्रये न्यसेत् ॥ ७८ ॥
चवर्गेण बुधो हृत्स्थष्टवर्गेण बृहस्पतिः ।
हृदयोपरि देवेशि तवर्गेण गले भृगुः ॥ ७९ ॥
पवर्गेण शनिर्नाभौ राहुर्वक्त्रे शवर्गतः ।
लक्षाभ्यां तु गुदे केतुर्न्यसेदेवं वरानने ॥ ८० ॥
अथ नक्षत्रवृन्दस्य न्यासं कुर्यात्सुखप्रदम् ।
ज्वलत्कालाग्निसंकाशाः सर्वाभरणभूषिताः ॥ ८१ ॥
नतिपाण्योऽश्विनीमुख्या वरदाभयपाणयः ।
युग्मंयुग्मं तथा युग्मं युग्मयुग्मेन रोहिणीम् ॥ ८२ ॥
एकमेकं तथा द्वन्द्वमेकं पुष्पान्तमुच्यते ।
ललाटे चक्षुषोः पश्चाद्वामदक्षिणकर्णयोः ॥ ८३ ॥
नासाद्वये च देवेशि तथा कण्ठे क्रमान्न्यसेत् ।
पुष्पान्तं च प्रविन्यस्य खगाणाभ्यां तु सार्पकम् ॥ ८४ ॥
दक्षस्कन्धे घङाभ्यां तु मघां स्कन्धे द्वितीयके ।
चपूर्वाफाल्गुनीं दक्षे कूर्परे छजसंयुताम् ॥ ८५ ॥
उत्तराफाल्गुनीं वामे कूर्परे विन्यसेत्प्रिये ।
झञवर्णास्थितो हस्तो मणिबन्धेऽथ दक्षिणे ॥ ८६
चित्रां टठस्थां वामे च मणिबन्धे न्यसेत्प्रिये ।
डकारेण युतां स्वातीं दक्षहस्ते प्रविन्यसेत् ॥ ८७ ॥
ढणयुक्तां विशाखां तु वामहस्ते प्रविन्यसेत् ।
तथदस्थानुराधां तु नाभौ विन्यस्य पार्वति ॥ ८८ ॥
धकारेण युतां ज्येष्ठां न्यसेद्दक्षकटौ प्रिये ।
नपफस्थं तथा मूलं न्यसेद्वामकटौ प्रिये ॥ ८९ ॥
पूर्वाषाढां बकारेण दक्षोरौ विन्यसेत्प्रिये ।
भकारेणोत्तराषाढां वामोरौ तदनन्तरम् ॥ ९० ॥

---

१ क. ग. °स्य थव° । २ क. ग. °तः । पक्षा° । ३ ख. °र्यात्सलक्षणम् । ४ ख. °णी ए ।
५ ख. ° यो: अंसद्व° । ६ ख. °ये वामकण्ठे दक्षकण्ठे क्र° ।

मकारयुक्तं श्रवणं दक्षजानुनि विन्यसेत् ।
यरस्थितां धनिष्ठां तु वामजानुनि विन्यसेत् ॥ ९१ ॥
लकारेण ततो देवि शतभिषं न्यसेत्प्रिये ।
दक्षजङ्घागतां पश्चात्पूर्वाभाद्रपदां ततः ॥ ९२ ॥
वशवर्णस्थितां न्यस्य वामजङ्घागतां क्रमात् ।
षसहस्थोत्तराभाद्रपदां दक्षिणपादके ॥ ९३ ॥
क्षकारेण ततो बिन्दुविसर्गाभ्यां च रेवतीं ।
वामपादे प्रविन्यस्य योगिनीन्यासमाचरेत् ॥ ९४ ॥
सितासितारुणा बभ्रुचित्रापीताश्च चिन्तयेत् ।
चतुर्भुजाः समैर्वक्त्रैः सर्वाभरणभूषिताः ॥ ९५ ॥
डांडीबीजद्वयं चोक्त्वा डमला वरयाः प्रिये ।
वामकर्णेन्दुनादाढ्यं डाकिन्यै नम इत्यपि ॥ ९६ ॥
स्वरान्ते तु प्रवक्तव्यं मान्ते रक्षपदद्वयम् ।
त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत्प्रिये ॥ ९७ ॥
कण्ठवर्णै राकिनीं तु रकाराद्यक्षरैः क्रमात् ।
पूर्ववद्बीजसंयुक्तैरसृगात्मांऽत्र संवदेत् ॥ ९८ ॥
अनाहते न्यसेत्पश्चाड्डकारादिफकारकैः ।
लाकिनी च तथा देवि मांसात्मा मणिपूरके ॥ ९९ ॥
बंलंवर्णैः काकिनीं तु स्वाधिष्ठाने तथाविधाम् ।
मेदस्वरूपां विन्यस्य वसवर्णैस्तु साकिनीम् ॥ १०० ॥
अस्थिरूपां च पूर्वोक्तबीजेनाऽऽधारके न्यसेत् ।
हक्षवर्णास्थितां तद्वन्मज्जारूपिणिकां यजेत् ॥ १०१ ॥
भ्रुवोर्मध्ये महेशानि हाकिनीं द्विदले *न्यसेत् ।
×पूर्ववद्बीजसंयुक्तां तद्वच्छुक्रात्मिकां यजेत् ॥ १०२ ॥
सर्वधातुगतां देवीं शुक्लवर्णां तु याकिनीम् ।
ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीयुतः ॥ १०३ ॥

---

* ख. पुस्तके न्यसेदित्यस्याग्रे 'हंसः शब्देन देवेशि तद्वद्याकिनिकां न्यसेत्' इत्यर्ध
× इदमर्धं पूर्वार्धश्चोत्तरश्लोकस्य ख. पुस्तके नास्ति ।

---

१ ख. भिर्विन्य° । २ ख. °युक्तोऽसृ° । ३ ख. °रमा तत्र° । ४ ख. बीजैर्मूले प्रा

राशिन्यासं ततः कुर्यात्सर्वरक्षाकरं सदा ।
रक्तश्वेतहरिद्वर्णपाण्डुचित्राशितान्स्मरेत् ॥ १०४ ॥
पिशङ्गपिङ्गलौ बभ्रुकर्बुरासितधूम्रकान् ।
अकारादिचतुष्केण विन्यसेत्सुरवन्दिते ॥ १०५ ॥
मेषं दक्षिणपद्गुल्फे ततो द्वंद्वेन वै वृषम् ।
न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः ॥ १०६ ॥
द्वाभ्यां कर्काटकं कुक्षौ द्वाभ्यां स्कन्धे च सिंहकम् ।
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम् ॥ १०७ ॥
दक्षिणे तु शिरोभागे विन्यसेद्वीरवन्दिते ।
तथा वामशिरोभागे कवर्गेण तुलाभृतम् ॥ १०८ ॥
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत्प्रिये ।
टवर्गेण तथा कुक्षौ धन्विनं विन्यसेत्प्रिये ॥ १०९ ॥
मकरं तु तवर्गेण वृषणे विन्यसेत्क्रमात् ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥ ११० ॥
यवर्गेण क्षकारेण मीनं गुल्फेऽथ वामके ।
अथ पीठानि विन्यस्येत्सर्वतीर्थमयानि हि ॥ १११ ॥
सितासितारुणाश्यामाहरित्पीतान्यनुक्रमात् ।
पुनः पुनः क्रमाद्देवि पञ्चाशत्पीठसंचयः ॥ ११२ ॥
पीठानि संस्मरेद्विद्वान्सर्वमातृकया युतान्(?) ।
मातृकार्णैर्न्यसेद्विद्वान्सर्वकामार्थसिद्धये ॥ ११३ ॥
कामरूपं महापीठं पीठं वाराणसीं ततः ।
नेपालं च तथा पीठं तथा वै पौण्ड्रवर्धनम् ॥ ११४ ॥
पुरस्थिरं तथा पीठं चन्द्रास्थिरमतः परम् ।
पूर्णशैलं महापीठमर्बुदं च ततः परम् ॥ ११५ ॥
आम्रातकेश्वरं पीठमेकाम्रं च ततः परम् ।
त्रिस्रोतःपीठमनघं कामकोटं ततः परम् ॥ ११६ ॥
कैलासभृगुकेदारं पीठं चन्द्रपुरं ततः ।
श्रीपीठं च तथोंकारं जालंधरमतः परम् ॥ ११७ ॥
मालवं च ततः पीठं कुलान्तं देवकोटकम् ।
गोकर्णं च महापीठं मारुतेश्वरमेव च ॥ ११८ ॥

१ ख. राशित° । २ ख. °स्थितं त° । ३ ख. चरस्थितम° । ४ ख. °टरम् ।

अट्टहासं च विरजं राजगेहं महापथम् ।
पीठं कोल्लगिरिं प्रोक्तमेलापुरमतः परम् ॥ ११९ ॥
कामेश्वरं महापीठं महापीठं जयन्तिका ।
पीठमुज्जयनी चैव चरित्रं क्षीरकाभिधम् ॥ १२० ॥
हस्तिनापुरपीठं च उड्डीशं च प्रयागकम् ।
षष्ठीशं च तथा पीठं मायापुरजलेश्वरम् ॥ १२१ ॥
मलयं च महापीठं श्रीशैलं मेरुकं गिरिम् ।
महेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥ १२२ ॥
महालक्ष्मीमयं पीठमुड्डीयानमतः परम् ।
छायाच्छत्रपुरं पीठं तथैव परमेश्वरि ॥ १२३ ॥
पञ्चाशत्पीठविन्यासं मातृकावन्न्यसेत्सदा ।
षोढा न्यासो महादेवि न्यस्त्वा साक्षात्स्वयं शिवः॥
अथ कामान्न्यसेद्देवि दाडिमीकुसुमप्रभान् ।
वामाङ्कुशक्तिसहितान्पुष्पबाणेक्षुकार्मुकान् ॥ १२५
शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः ।
नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणाक्षमाः ॥ १२६
न्यसेत्कामरतिं पश्चात्कामप्रीतिं सुरेश्वरि ।
कान्तश्च कामिनीयुक्तो भ्रान्तो वै मोहिनीयुतः ॥
कामाङ्गः कमले तद्वत्कामचारो विलासिनी ।
कर्णकल्पलते तद्वत्कोमलश्यामले तथा ॥ १२८ ॥
कामवर्धनसंयुक्ता विज्ञेया तु शुचिस्मिता ।
कामश्च विस्मितायुक्तो विशालाक्षीयुतो रमः ॥ १
रमणो लेलिहायुक्ता रतिनाथदिगम्बरे ।
रतिप्रियश्च वामा च रात्रिनाथश्च कुब्जिका ॥ १३
स्मरेण च युता कान्ता रमणः सत्यया युतः ।
निशाचरश्च कल्याणी नन्दनो मोगिनी तथा ॥ १३
नन्दकः कामदायुक्तो मदनश्च सुलोचना ।
सुलावण्यायुतो देवि तथा नन्दसुताभिधः ॥ १३२

१ ख. °यापीठं सुरेश्वरि । २ क. ग. °देव्या न्य° । ३ ख. कामधुक्म° । ४ ख
५ ख. नन्देशः कामिनीयु° । ६ क. ग. °न्दयिता° ।

निशाचरश्च मर्दिन्या रतिर्हंसस्ततः परम् ।
कलहः प्रियया युक्तः पुष्पधन्वा च काङ्क्षिणी ॥ १३३ ॥
महाधनुश्च सुमुखा ग्रामणीर्नलिनीयुतः ।
भीमश्च जटिनीयुक्तो भ्रामणः पालिनीयुतः ॥ १३४ ॥
भ्रमण[1]ः शिखिनीयुक्तो शान्तमुग्धे ततः परम् ।
भ्रामणो रमया युक्तो भृगुर्भूमा ततः परम् ॥ १३५ ॥
भ्रान्तश्चामरलोला च भ्रमावहसुचञ्चले ।
मोहनो दीर्घजिह्वा च[2] मोचकश्च तथा सती ॥ १३६ ॥
तथा मुग्धश्च लोलाक्षी मोहमर्दनभृङ्गिणी ।
मोहकश्च चपेटा च मन्मथो नाथया युतः ॥ १३७ ॥
मातङ्गमालिनीयु[3]ग्मं भृङ्गी च कलहंसिनी ।
गायकेन समायुक्ता तथा वै विश्वतोमुखी ॥ १३८ ॥
गर्जनन्दि[4]कया युक्तो गीति[5]श्च तदनन्तरम् ।
नर्तकः सह रञ्जिन्या खेलः कान्तिसमन्वितः ॥ १३९ ॥
उन्मत्तः कलकण्ठे च मत्तकश्च वृकोदरी ।
मेघः श्यामान्वितो देवी विमलश्रीः क्रमात्प्रिये ॥ १४० ॥
मातृकार्णैर्न्यसेद्देवी(वि) मातृकावत्सदाऽनघे ।
अनेन न्यासयोगेन त्रैलोक्यक्षोभको भवेत् ॥ १४१ ॥
बालायास्त्रिपुरेशान्या नवयोन्यङ्कितं न्यसेत् ।
श्रोत्रयोश्चुबुके चैव शङ्खास्येषु दृशोर्नसि ॥ १४२ ॥
अंसद्वये च हृदये न्यसेत्कूर्परकुक्षिषु ।
जान्वन्[6]धुपादगुह्येषु पार्श्वहृत्सु स्तनद्वये ॥ १४३ ॥
कण्ठे च नवयोन्याख्यं न्यसेद्बीजत्रयात्मकम् ।
पुनर्बालां समुच्चार्य षोडशा[7]र्णां प्रविन्यसेत् ॥ १४४ ॥
पुनर्बालां समुच्चार्य चतुरस्रं च चिन्तयेत् ।
गोलकं न्यासयोगेन श्रीचक्रं परिचिन्तयेत् ॥ १४५ ॥
षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले ।
नव स्थानानि संकल्प्य न्यसेद्देवि ततः परम् ॥ १४६ ॥

---

१ ख. °णः शङ्खिनी° । २ ख. च कपर्दश्च तथा मतिः । ३ क. °युक्तं भृङ्गिणिकश्च हं° । ४ क. जगदानन्दिकायु° । ५ क. गीतश्च । ६ ख पुस्तके °न्वण्डपा° इति । पाठान्तरम् । ७ ख. °शारं प्र° ।

श्रीविद्यां ब्रह्मरन्ध्रे च पृष्ठतो गुरवः क्रमात् ।
तिथिनित्यास्ततो देवि मातृकास्वरसंयुताः ॥ १४
मातृकावन्न्यसेद्वक्त्रे सर्वसौभाग्यदायकाः ॥ १४८

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यान्यासविधानं नाम चतुर्दशः पटलः ॥

अथ पञ्चदशः पटलः ।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि नित्यामण्डलमुत्तमम् ।
कामेश्वरी महाविद्या सर्वलोकवशंकरी ॥ १ ॥
बालां तारं च हृत्प्रान्ते कामेश्वरिपदं लिखेत् ।
इच्छाकामफलप्रान्ते प्रदेसर्वपदं लिखेत् ॥ २ ॥
ततः सत्त्ववशं ब्रूयात्करिसर्वजगत्पदम् ।
क्षोभणान्ते कारि ब्रूयाद्धुंकारत्रितयं लिखेत् ॥ ३
पञ्च बाणान्समालिख्य संहारेण कुमारिकाम् ।
एषा कामेश्वरी नित्या प्रसङ्गात्कथिताऽद्रिजे ॥ ४
वाग्भवं भगशब्दान्ते भुगे भागिनि चाऽऽलिखेत् ।
भगोदरि भगान्ते च भगमाले भगावहे ॥ ५ ॥
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तिके ।
निपातिनि च सर्वान्ते ततो भगवशंकरि ॥ ६ ॥
भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्वं चाऽऽलिखेत् ॥
भगानि मे ह्यानयेति वरदेति समालिखेत् ।
रेते सुरेते भग च क्लिन्ने क्लिन्नद्रवे ततः ॥ ८ ॥
क्लेदय द्रावयाथो च सर्वसत्त्वान्भगेश्वरि ।
अमोघे भगविच्चे च क्षुम क्षोभय सर्वं च ॥ ९ ॥
सत्त्वान्भगेश्वरि ब्रूयाद्वाग्भवं ब्लूंजमादिमम् ।
भेंब्लूं मोंब्लूं च हेंब्लूं च हें क्लिन्ने च ततः परम् ॥
सर्वाणि च भगान्यन्ते मे वशं चाऽऽनयेति च ।
स्त्रीबीजं च हर प्रान्ते बले मात्मकमक्षरम् ॥ ११ ॥

१ क. ग. देवी मा° । २ ख. °दं वदेत् । ३ ख. च भगक्लिन्ने त° इति पाठान्तरम्

प्रणवं पूर्वमुच्चार्य तथाऽङ्कुशयुगं लिखेत् ॥ १४ ॥
तन्मध्ये विलिखेद्देवि भरोमात्मकमक्षरम् ।
चवर्गमन्त्यहीनं तु विलिखेद्वह्निसंस्थितम् ॥ १५ ॥
चतुर्दशस्वरोपेतं बिन्दुनादाङ्कितं पृथक् ।
वह्निजायान्वितो मन्त्रो भेरुण्डायाः फलप्रदः ॥ १६ ॥
भुवनेशीं समुच्चार्य चतुर्थ्यां वह्निवासिनीम् ।
हृदन्तोऽयं मनुर्देवि नित्येयं वह्निवासिनी ॥ १७ ॥
प्रणवं भुवनेशानि फरेमात्मकमक्षरम् ।
सविसर्गः शशी पश्चान्नित्यक्लिन्ने मदद्रवे ॥ १८ ॥
वह्निजायान्विता[1] विद्या सर्वैश्वर्यप्रदायिनी ।
महाविद्येश्वरी नित्या प्रसङ्गेन मयेरिता ॥ १९ ॥
पराबीजं समुच्चार्य शिवदूतीं च ङेयुताम् ।
हृदन्तोऽयं मनुर्देवि दूतीयं सर्वकामदा ॥ २० ॥
ओंकारबीजमुच्चार्य परां कवचमालिखेत् ।
खे च छे क्षः समालिख्य स्त्रीबीजं च समालिखेत् ॥ २१ ॥
हुंकारं क्षे परा चास्त्रं विद्येयं द्वादशाक्षरी ।
त्वरिता नाम नित्येयं त्रिषु लोकेषु दुर्लभा ॥ २२ ॥
सर्वासिंहासनमयी बालेव कुलसुन्दरी ।
बालया पुटितां कुर्यात्तथा वै नित्यभैरवी ॥ २३ ॥
पञ्च बाणाश्च देवेशी नित्या शक्राक्षरी भवेत् ।
त्रैलोक्यविमला विद्या नित्याख्या परमेश्वरी ॥ २४ ॥
पञ्चाक्षरी बाणबीजैर्नित्येयमपरा प्रिये ।
प्रणवं[2] भुवनेशानि फरेमात्मकमक्षरम् ॥ २५ ॥
स्नूमात्मकं द्वितीयं च भुवनेश्यङ्कुशं ततः ।

---

१ ख. °ता विद्या सर्वलोकवशंकरी । २ क. ग. °न्वितो वि° ।

नित्यशब्दं समुद्धृत्य संबुद्ध्या तु मदद्रवाम् ॥ २६
कवचं चाङ्कुशं पञ्चदशैर्नीलपताकिनी ।
वान्तं कालसमायुक्तं वह्निवायुगतं ततः ॥ २७ ॥
पृथक्पञ्चसमायुक्तं ततः शक्रस्वरान्वितम् ।
बिन्दुनादाङ्कितं बीजं नित्येयं विजया प्रिये ॥ २८ ॥
चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत् ।
चतुर्थ्या तु ततो देवि विलिखेत्सर्वमङ्गलाम् ॥ २९
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ।
तारं हृद्भगवत्यन्ते ज्वालामालिनि देवि च ॥ ३० ॥
द्विरुच्चार्य च सर्वान्ते भूतसंहारकारिके ।
जातवेदसि संलिख्य ज्वलन्तिपदयुग्मकम् ॥ ३१ ॥
ज्वलेतिप्रज्वलद्वंद्वं हुंकारद्वितयं लिखेत् ।
वह्निबीजत्रयं हुं च अस्त्रस्वाहान्वितो मनुः ॥ ३२
इयं नित्या महादेवि ज्वालामालिनिका परा ।
कवर्गान्तं स्वरान्तं च शक्रस्वरविभूषितम् ॥ ३३ ॥
बिन्दुनादकलाक्रान्तं विचित्रा परमेश्वरी ।
अकारादिषु सर्वेषु स्वरेषु क्रमतो न्यसेत् ॥ ३४ ॥
अःस्वरे परमेशानि श्रीविद्यां विश्वमातृकाम् ।
स्वरवह्निन्यसेन्नित्या नीरजायतलोचने ॥ ३५ ॥
प्रकटाद्या न्यसेत्पश्चादाधारादिषु मन्त्रवित् ।
स्थितिन्यासं ततः कुर्याच्छ्रीविद्याषोडशाक्षरैः ॥ ३६
पञ्चाङ्गुलीषु करयोर्ब्रह्मरन्ध्रे मुखे हृदि ।
त्रयं विन्यस्य नाभ्यादिपादान्ते चैकमद्रिजे ॥ ३७ ॥
गलादिनाभिपर्यन्तमपरं हि ततः परम् ।
ब्रह्मरन्ध्रादिकंठान्तमेकं विन्यस्य पादयोः ॥ ३८ ॥
अङ्गुलीषु च विन्यस्य न्यासोऽयं स्थितिकारकः ।
सृष्टिन्यासं ततः कुर्यात्सर्वसिद्धिप्रदायकम् ॥ ३९ ॥
ब्रह्मरन्ध्रेऽलिके नेत्रश्रुतिघ्राणोष्ठकेषु च ।
दन्तान्तरोर्ध्वके देवि जिह्वायां गलकूपके ॥ ४० ॥

---

१ ख. °शं विद्या देवि मी° । २ ख. °ह्निबीजगतं त° । ३ क. च । देव्युच्चा° । रत्रित° इति पाठान्तरम् ।

पृष्ठे सर्वाङ्गहृदयस्तनकुक्षिषु लिङ्गके ।
श्रीविद्यार्णैर्न्यसेद्देवि मन्त्रं सर्वसमृद्धये ॥ ४१ ॥
सर्वाङ्गे विन्यसेत्पश्चाद्व्यापकत्वेन सुन्दरि ।
प्राणानायम्य विधिवन्मुद्रासंनद्धविग्रहः ॥ ४२ ॥
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरी बीजरूपा च योनिमुद्रेत्यनुक्रमात् ॥ ४३ ॥
बीजानि वक्ष्ये क्रमतो मुद्राणां परमेश्वरि ।
पञ्चबाणैः पञ्च मुद्राः करोमात्मकमक्षरम् ॥ ४४ ॥
आद्यं तु रुद्रभैरव्या बीजं सादाशिवं ततः ।
ततस्तु वाग्भवं देवि क्रमेण हि चतुष्टयम् ॥ ४५ ॥
चतुर्मुद्रासु बीजानि नवमुद्रास्वनुक्रमात् ।
अथ वक्ष्ये महेशानि मुद्राविवरणं क्रमात् ॥ ४६ ॥
वामहस्तेन मुष्टिं तु बद्ध्वा कर्णप्रदेशके ।
तर्जनीं सरलां कृत्वा भ्रामयेत्तन्त्रवित्तमः ॥ ४७ ॥
सौभाग्यदण्डिनी मुद्रा न्यासकाले तु सूचिता ।
अन्तरङ्गुष्ठमुष्ट्या तु निरुध्य जगतीमिमाम् ॥ ४८ ॥
रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिता ।
पाणिद्वयं महेशानि परिवर्तनयोगतः ॥ ४९ ॥
योजयित्वा तर्जनीभ्यामनामे धारयेत्प्रिये ।
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्तथा ॥ ५० ॥
अङ्गुष्ठावपि संयोज्य त्रिधा युग्मक्रमेण तु ।
त्रिखण्डा नाम मुद्रेयं त्रिपुराह्वानकर्मणि ॥ ५१ ॥
विरलौ तु करौ कृत्वा मध्यमे मध्यगे कुरु ।
अङ्गुष्ठाभ्यां कनिष्ठे च संपीड्य सरले ततः ॥ ५२ ॥
तर्जन्यौ दण्डवत्कुर्यान्मध्यमस्थे ह्यनामिके ।
सर्वसंक्षोभिणी मुद्रा त्रैलोक्यक्षोभकारिणी ॥ ५३ ॥
मध्यमे तर्जनीयुक्ते सरले स्यात्तदा भवेत् ।
सर्वविद्राविणी मुद्रा द्रावयेत्सचराचरम् ॥ ५४ ॥

---

१ ख. मन्त्री स° । २ ख. °तः । केवलं वा° । ३ ख. निबध्नजगा° । ४ ख. °ङ्गुष्ठौ च कनिष्ठाभ्यां सं° इति पाठान्तरम् ।

मध्यमे तर्जनीयुग्मे वक्रे कुर्यात्सुलोचने ।
एतस्या एव मुद्रायास्तदा कर्षणकारिणी ॥ ५५ ॥
विपरीतौ तलौ कृत्वा चाङ्गुलीं हृन्मुखा यजेत् ।
परिवर्तनमार्गेण क्रमेण निबिडास्ततः ॥ ५६ ॥
अङ्गुष्ठाग्रप्रदेशे तु तर्जन्यावङ्कुशाकृती ।
सर्वा एकत्र संयोज्य सर्ववश्यकरी भवेत् ॥ ५७ ॥
पुटाञ्जलिकरौ कृत्वा मध्यमागर्भसंस्थिते ।
परस्परकनिष्ठे तु तर्जन्यग्रगते ततः ॥ ५८ ॥
अनामिके तु सरले मध्यमामुखदेशगौ ।
अङ्गुष्ठौ परमेशानि सर्वोन्मादनकारिणी ॥ ५९ ॥
एतस्या एव मुद्राया अनामातर्जनीक्रमात् ।
अङ्कुशाकाररूपा तु मुद्रेयं तु महाङ्कुशा ॥ ६० ॥
वामं भुजं दक्षभुजे दक्षिणं वामदेशतः ।
निवेश्य योजयेत्पश्चात्परिवर्त्य क्रमेण हि ॥ ६१ ॥
कनिष्ठानामिकायुग्मे तर्जनीभ्यां निरोधयेत् ।
मध्यमे सरले कृत्वा योनिवत्सरलौ ततः ॥ ६२ ॥
अङ्गुष्ठौ खेचरी मुद्रा पार्थिवस्थानयोजिनी ।
प्रियेयं सर्वदेवानां खेचरत्वप्रदायिनी ॥ ६३ ॥
परिघर्घाञ्जलिं कृत्वा कनिष्ठाग्रगते ततः ।
मध्यमे स्थापयेद्देवि कनिष्ठे धारयेत्ततः ॥ ६४ ॥
अनामिकाभ्यां सुदृढं तर्जनीमध्यमायुगम् ।
अङ्गुष्ठाभ्यां समायोज्यमर्धचन्द्राकृतिं प्रिये ॥ ६५ ॥
बीजमुद्रेयमाख्याता सर्वानन्दकरी प्रिये ।
परिवर्त्य करौ सम्यक्तर्जनीवामने समे ॥ ६६ ॥
मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् ।
अन्योन्यानामिके देवि कनिष्ठे तु यथास्थिते ॥ ६७ ॥
अङ्गुष्ठाभ्यां योजिताभ्यां योन्याकारं तु कारयेत् ।

---

१ ख. °मात्रेण । २ ख. °योज्याः स° । ३ ख. °मानखदेशिकौ । अ° । ४ क. °त्याक° । ५ ख. योज्ये । ६ क. ग. °जिता । प्रि° । ७ ख. °युतम् । अ° । ८ ख. °तिं यजे° । ९ क. ग. ° वाहने ।

योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ ६८ ॥
एवं विन्यस्तदेहः सन्मुद्रासंनद्धविग्रहः।
अन्तर्यागविधिं कुर्याद्येन साक्षात्स्वयं विभुः ॥ ६९ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यान्यासविवरणं नाम पञ्चदशः पटलः ॥ १५ ॥

---

अथ षोडशः पटलः।

---

श्रीदेव्युवाच—

अन्तर्यागविधिं देव बहिर्यागविधिं तथा।
सकलं कथयेशान यद्यहं तव वल्लभा ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि यजनं चाऽऽन्तरं महत्।
मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ॥ २ ॥
उद्यत्सूर्यप्रभाजालविद्युत्कोटिप्रभामयी।
चन्द्रकोटिप्रभाद्रावां त्रैलोक्यैकप्रभामयीम् ॥ ३ ॥
अशेषजगदुत्पत्तिस्थितिसंहारकारिणीम्।
ध्यायेन्मनो यथा देवीं निश्चलं जायते तथा ॥ ४ ॥
सहजानन्दसंदोहमन्दिरं भवति क्षणात्।
मनो निश्चलतां प्राप्तं शिवशक्तिप्रभावतः ॥ ५ ॥
समाधिर्जायते तत्र संज्ञाद्वयविजृम्भितः।
स्वयंप्रज्ञातनामैको ह्यसंप्रज्ञातनामधृत् ॥ ६ ॥
स्वयंप्रज्ञातसंज्ञस्तु शक्त्याधिक्येन जायते।
असंप्रज्ञातनामैको शिवाधिक्येन वै भवेत् ॥ ७ ॥
स्वयंप्रज्ञातभेदस्तु तीव्रस्तीव्रतरो भवेत्।
असंप्रज्ञातभेदस्तु मन्दो मन्दतरस्तथा ॥ ८ ॥
( * संज्ञा प्रज्ञा न यत्रैवं स्वयंप्रज्ञोऽभिधीयते।
असंप्रज्ञो हि भूयस्तु स्थितप्रज्ञः प्रतिष्ठितः ॥ ९ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति।

---

१ ख. °धिं ब्रूहि ब°। २ ख. °कलाकार ईश°। ३ ख. °यसम्। ४ ख. °मयम्। ५ ख. °द्रावं त्रै°। ६ ख. °मयम्। ७ ख. °कारकम्। ८ ख. देवि। ९ क. ग. °तम्। स्व°। १० ख. नामा तु शिवतत्त्वेन वै°।

प्रज्ञाप्रज्ञानमेवेदमसंस्मयमिति द्वयम् ।
संज्ञाद्वयमिदं देवि शिवतत्त्वेन वै भवेत् ॥ १० ॥ )
हास्यरोदनरोमाञ्चकम्पस्वेदादिलक्षणः ।
तीव्रस्तीव्रतरो देवि समाधिरुपलक्षितः ॥ ११ ॥
निमेषवर्जिते नेत्रे वपुस्तल्लक्षणं स्थिरम् ।
मन्दो मन्दतरो देवि समाधिः परिकीर्तितः ॥ १२ ॥
शांभवेन च वेधेन सुखी भूयान्निरन्तरम् ।
अन्तर्यागविधिं कृत्वा बहिर्यजनमाचरेत् ॥ १३ ॥
एवं विन्यस्तदेहः सन्सर्वात्मा साधकोत्तमः ।
ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् ॥ १४ ॥
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ।
उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ॥ १५ ॥
जपाकुसुमसंकाशां पद्मरागमणिप्रभाम् ।
स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् ॥ १६ ॥
रक्तोत्पलदलाकारपादपल्लवराजिताम् ।
अनर्घ्यरत्नखचितमञ्जीरचरणद्वयाम् ॥ १७ ॥
पादाङ्गुलीयकाक्षिप्तरत्नतेजोविराजिताम् ।
कदलीललितस्तम्भसुकुमारोरुकोमलाम् ॥ १८ ॥
नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ।
मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् ॥ १९ ॥
अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ।
रोमराजिलतोद्भूतमहाकुचफलान्विताम् ॥ २० ॥
सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ।
अनर्घ्यमौक्तिकस्फारहारभारविराजिताम् ॥ २१ ॥
नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ।
श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् ॥ २२ ॥
उद्यदादित्यसंकाशताटङ्कसुमुखप्रभाम् ।
पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् ॥ २३ ॥

---

१ ख. °दादिलक्षितः । ती° । २ ख. °लावञ्जमा° । ३ ख. °लताभूत । ४ ख. °रीम् । ५ ख. °नां मीनलोचनाम् ।

स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ।
ललाटपट्टसंराजद्रत्नोढ्यातिलकाङ्किताम् ॥ २४ ॥
मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ।
स्फुरच्चन्द्रकलाराजन्मुकुटां च त्रिलोचनाम् ॥ २५ ॥
प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ।
इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् ॥ २६ ॥
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ।
सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरिणीम् ॥ २७ ॥
*सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ।
सर्वक्षेत्रमयीं देवीं[1] सर्वविद्यामयीं शिवाम् ॥ २८ ॥
सर्वयागमयीं[2] विद्यां सर्वदेवस्वरूपिणीम्[3] ।
सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् ॥ २९ ॥
सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ।
सर्वानन्दमयीं ज्ञानगह्वरां संविदं पराम् ॥ ३० ॥
एवं ध्यात्वा परामम्बां वहन्नासापुटं[4] क्रमात् ।
आवाह्य चक्रमध्ये तु मुद्रया हि त्रिखण्डया ॥ ३१ ॥
संस्थितां चिन्तयेत्तत्र श्रीपीठान्तर्निवासिनीम् ।
मुद्राः संदर्शयेद्देवि तर्पणैस्तु त्रिधा यजेत् ॥ ३२ ॥
लयाङ्गं कल्पयेद्देहे देव्यास्तु परमेश्वरि ।
गन्धपुष्पाक्षतादींश्च देव्यै सम्यङ्निवेदयेत् ॥ ३३ ॥
उपचारैः षोडशभिः संपूज्य परदेवताम् ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ ३४ ॥
एतस्मिन्समये देवि तिथिनित्यां प्रपूजयेत् ।
कामेश्वर्यादिका नित्या विचित्रान्ताः परेश्वरि ॥ ३५ ॥
प्रतिपत्पौर्णमास्यन्ततिथिरूपाः प्रपूजयेत् ।
विभाव्य च महात्र्यस्रे पूर्वदक्षोत्तरं क्रमात् ॥ ३६ ॥
रेखासु विलिखेत्तत्र पञ्चपञ्च क्रमेण हि ।

---

* इदमर्धं ख. पुस्तके नास्ति ।

---

१ क. ग. विद्यां । २ ख. °र्वयोग° ३ ख. °र्ववेदस्व° । ४ ख. °न्नादीपु° । ५ ख. °क्रमम°

अकाराद्या उवर्णान्ता दक्षिणस्यां विचिन्तयेत् ॥ ३७
ततश्च पूर्वरेखायामृकारादिकपञ्चकम् ।
विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः ॥ ३८ ॥
अनुस्वारान्तमन्त्रस्तु विसर्गे षोडशीं यजेत् ।
वामावर्तेन देवेशि नित्याः षोडश कीर्तिताः ॥ ३९ ॥
प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥ ४० ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम् ।
विचित्राद्या वरारोहे यावत्कामेश्वरी भवेत् ॥ ४१ ॥
पूजनीया विलोमेन भक्त्या तु परमेश्वरी ।
कलाः षोडश देवेशि यस्तु चन्द्रकलाः क्रमात् ॥ ४२
स सौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ।
कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात्ततः ॥ ४३ ॥
तिथिनित्यां त्रिधा देवि पूजयेद्भाग्यहेतवे ।
पुनः श्रीत्रिपुरानित्यां यजेत्सौभाग्यहेतवे ॥ ४४ ॥
एतस्मिन्समये देवि गुरून्संपूजयेद्बुधः ।
पुष्पसंकोचयोगेन कथयामि तवानघे ॥ ४५ ॥
रश्मिवृन्दं दलमितं गुरवस्तु शताधिकाः ।
तस्मात्संकोचयेत्पुष्पमामिताः सिद्धिहानिदाः ॥ ४६ ॥
नष्टसंततिविज्ञेया मिताः सर्वसमृद्धिदाः ।
पुष्पं संकोचयेन्नोचेद्द्वादशे नष्टसंततिः ॥ ४७ ॥
संतत्या नष्टरूपः सन्न भवेद्देवताप्रियः ।
अत एव मया सम्यक्पुष्पं संकुचितं प्रिये ॥ ४८ ॥
कामराजाख्यविद्याया गुरवस्तु समृद्धिदाः ।
मध्यप्राक्त्र्यश्रमध्ये हि गुरुपङ्क्तिं त्रिधाऽर्चयेत् ॥ ४९ ॥
पराख्यान्पूजयेदादौ परापरविभक्तिकान् ।
ततोऽपरांस्त्रिधा देवि गुरून्संपूजयेत्प्रिये ॥ ५० ॥
दिव्यौघे तु परान्विद्धि सप्तसंख्यान्वरानने ।

---

१ ख. °खायां दीर्घकर्णादिर° । २ क. ग. °क्त्यादीन्विलि° । ३ ख. °न्तमात्रास्तु । ४ °न्नित्यं म° । ५ ख. महद्देवि° ।

आनन्दनाथशब्दा+न्ता गुरवः पुरुषाः प्रिये ॥ ५१ ॥
स्त्रियः पराम्बाशब्दान्ता विज्ञेया वीरवन्दिते ।
परप्रकाशो देवेशि ततः परशिवो मतः ॥ ५२ ॥
परा शक्तिस्तथा देवि कौलेश्वर इति प्रिये ।
शुक्ला देवि कुलेशानकामेश्वर्यम्बिकाः क्रमात् ॥ ५३ ॥
मुनिसंख्यास्तु गुरवः पराख्या दिव्यरूपणः ।
भोगक्लिन्नस्तु समयो[1] वेदाख्यः सहजस्तथा ॥ ५४ ॥
परापराख्यसिद्धौघे[2] मानवौघे शृणु प्रिये ।
गगनो विश्वविमलौ मदनो भुवनस्तथा ॥ ५५ ॥
लीला स्वात्मप्रिय[3]ः[4] पश्चान्नागसंख्यास्तु मानवाः[5] ।
अपराः परमेशानि* नियता अक्षरा इमे ॥ ५६ ॥
एतत्त्रयं तु नियतं देशिकानां हिताय च ।
मयोद्धृतं महेशानि पुष्पं संकुचितं प्रिये ॥ ५७ ॥
मानवौघान्तिके पश्चात्स्वगुरुत्रितयं यजेत् ।
परमेष्ठी गुरुः पश्चाद्गुरुः परमसंज्ञितः ॥ ५८ ॥
स्वगुरुश्च महेशानि पूजयेत्तु गुरुत्रयम् ।
अथ वा मानवौघान्त एकं स्वगुरुमर्चयेत् ॥ ५९ ॥
अयं प्रकारः कथितः प्रकारान्तरमुच्यते ।
वन्द्यं सर्वप्रकाराणां मानवौघाष्टकादथ[6] ॥ ६० ॥
गुरवो नवसंख्याका इह यावद्भवन्ति हि ।
नवचक्रेश्वरी यस्मात्तावत्पुष्पं प्रकाशयेत् ॥ ६१ ॥
मानवौघे तदा देवि दशसप्त भवन्ति हि ।
पश्चात्संकोचयेत्पुष्पं नवमं श्रीगुरुं यजेत् ॥ ६२ ॥
अज्ञातगुरुशिष्याणां कथयामि वरानने ।
गुरुभ्यो नम उच्चार्य पादुकाभ्यो नमो लिखेत् ॥ ६३ ॥
गुर्वन्ते परमान्ते च[7] गुरुभ्यो नम इत्यपि ।

---

+ अत्रैतत्ख. पुस्तके पाठान्तरम्—°न्ता विज्ञेया वीरवन्दिते । अम्बान्ता गुरवः प्रोक्ताः स्त्रीलिङ्गाः परमेश्वरि । पर° । * ख. पुस्तके °नि पुष्पं संकुचितं प्रिये । ए° इति पाठान्तरम् ।

---

१ ख. °मयः सहजो वेदसंख्यकाः । २ ख. °द्धौघो मानवौघं शृ° । ३ क. °स्वात्मा प्रि° । ४ ख. °प्रियाः प° । ५ क. °नवः । अ° । ६ क. °कादिकम् । गु° । ७ ख. पुस्तके, च परमेष्ठ्यन्तके तथा । ए° इति पाठान्तरम् ।

एतेषां पादुकास्तद्वदाचार्येभ्यो नमो वदेत् ॥ ६४ ॥
आचार्यपादुकास्तद्वत्पूर्वसिद्धास्तु पादुकाः ।
सामान्यगुरुशिष्याणां गुरुपङ्क्तिरियं भवेत् ॥ ६५ ॥
गुरुपङ्क्तिं प्रपूज्याथ स्वयं श्रीत्रिपुरा भवेत् ।
गुरुपङ्क्तिविहीनस्तु पुरुषः पङ्क्तिवर्जितः ॥ ६६ ॥
सामान्यगुरुपङ्क्तित्वान्न भवेत्पङ्क्तिवर्जितः ।[1]
पुष्पसंकोचमार्गोऽयं मया सिद्धः कृतः प्रिये ॥ ६७ ॥
कृपया परमेशानि साधकानां हिताय च ।
कामराजाख्यगुरवः श्रीविद्याविषये क्रमात् ॥ ६८ ॥
लोपामुद्राख्यविद्याऽऽया गुरूञ्शृणु वरानने ।
परमाद्यशिवश्चाऽऽद्या कामेश्वर्यम्बिका तथा ॥ ६९ ॥
दिव्यौघश्च महौघश्च सर्वानन्दस्ततः परम् ।
प्रज्ञादेव्यम्बिका पश्चात्प्रकाशः सप्तमो भवेत् ॥ ७० ॥
दिव्याः पराख्यगुरवो लोपामुद्राप्रभामयाः ।
दिव्याश्चित्रश्च कैवल्यदेव्यम्बा च महोदयः[2] ॥ ७१ ॥
सिद्धाः परापरा ज्ञेया मानवौघं शृणु प्रिये ।
विद्या शक्तिश्च विश्वश्च चतुर्थः कोमलो भवेत् ॥ ७२ ॥
पञ्चमस्तु परानन्दो मनोहर इति प्रिये ।
स्वात्मानन्दः सप्तमस्तु प्रतिभोऽष्टम उच्यते ॥ ७३ ॥
अपराख्या इमे देवि गुरवः परिकीर्तिताः ।
पूर्ववद्योजयेत्पश्चादष्टानन्तरमेव च ॥ ७४ ॥
त्रयं वा स्वगुरुं वाऽपि नवान्तं वाऽब्जलोचने ।
दक्षिणामूर्तिशिष्याणां गुरुक्रम उदाहृतः ॥ ७५ ॥
संप्रदाया अनेके च ज्ञातव्याः स्वगुरुक्रमात् ।
संप्रदायविहीनस्य न दद्यात्पङ्क्तिमुत्तमाम् ॥ ७६ ॥
साधारणास्तु गुरवः सर्वभेदेषु वै समाः ।
गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः ॥ ७७ ॥
त्रैलोक्यमोहने देवि सर्वाशापरिपूरके ।
सर्वसंक्षोभणे चक्रे पूर्वाम्नायं प्रपूजयेत् ॥ ७८ ॥

---

१ ख. पङ्क्त्या तु न भ° । २ ख. °ये । चिद्विश्वशक्तीश्वरकाश्च °ये ऋद्धिः शक्तिर्वि
इति पाठान्तरम् ।

सर्वसौभाग्यदे चक्रे तथा सर्वार्थसाधके ।
सर्वरक्षाकरे चक्रे दक्षाम्नायं प्रपूजयेत् ॥ ७९ ॥
मध्यचक्रत्रये देवि पश्चिमाम्नायमर्चयेत् ।
नवचक्रेषु देवेशि कौबेराम्नायमर्चयेत् ॥ ८० ॥
बैन्दवे परमेशानि मध्यसिंहासनं यजेत् ।
अनेनैव प्रकारेण पूजयेत्पञ्च पञ्चिकाः ॥ ८१ ॥
श्रीविद्या च परं ज्योतिः परा निष्कलशांभवी ।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ॥ ८२ ॥
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्या पञ्च लक्ष्म्यः प्रकीर्तिताः ॥ ८३ ॥
श्रीविद्या[1] त्वरिता चैव पारजातेश्वरी तथा ।
त्रिपुटा पञ्च[2]बाणेशी प्रञ्च कल्पलताः स्मृताः ॥ ८४ ॥
श्रीविद्या[3] मूलपीठेशी सुधा श्रीरमृतेश्वरी ।
अन्नपूर्णेति विख्याताः पञ्चैताः कामधेनवः ॥ ८५ ॥
श्रीविद्या[4] सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराहीति च संप्रोक्ताः पञ्च रत्नाः प्रकीर्तिताः * ॥ ८६ ॥
मूलविद्या महेशानि श्रीविद्या परिकीर्तिता ।
वारुणान्तं वह्निसंस्थं बिन्दुनादसमन्वितम् ॥ ८७ ॥
वामनेत्रसमायुक्तं लक्ष्मीबीजमुदाहृतम् ।
श्रीबीज तु पराबीजं लक्ष्मीबीजमुदाहृतम् ॥ ८८ ॥
प्रणवं पूर्वमुच्चार्य ह्लीमात्मकं समुच्चरेत् ।
श्रीपुटा चानु कमले कमलाये प्रसीदतु ॥ ८९ ॥
लाये मध्यगतां भूमिं रुद्रस्थाने नियोजयेत् ।
प्रसीद युगुलं दद्याच्छ्रीबीजं भुवनेश्वरीम् ॥ ९० ॥
श्रिया बीजं ततो दद्यान्महालक्ष्मी च (श्च)हृन्मनुः ।
सप्तविंशतिवर्णात्मा महालक्ष्मीमनुर्मतः ॥ ९१ ॥
श्रीबीजं च पराबीजं कामराजं समालिखेत् ।
इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा ॥ ९२ ॥

---

* इत आरभ्य श्रीविद्यापूजनस्थाने इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति ।

---

१ ख. पुस्तके °द्या पारिजातेशी पञ्चबाणेश्वरी तथा । त्रि° इति पाठान्तरम् । २ ख. °ब कामेशी ' इति पाठान्तरम् । ३ ख. °द्याऽमृतपी° । ४ ख. °द्या चान्नपूर्णा च मा° इति पाठान्तरम् ।

चन्द्रेण मादनं लक्ष्मीर्देवी दीर्घाक्षिमण्डिता ।
विष्णुक्रूरेश्वरीयुक्ता रित्ययं वैष्णवीयुता (?)॥ ९३ ॥
श्रीबीजसंपुटं कुर्यात्सर्वशास्त्रप्रदायिनी ।
प्रणवं पूर्वमुच्चार्य पराहंसं समुद्धरेत् ॥ ९४ ॥
ततः सोहं शिरो देवि वसुवर्णोऽयमीरितः ।
वेदादिकेवला देवी परा निष्कलशांभवी ॥ ९५ ॥
हंसो जपार्वण त( र्णवस्त )त्र मातृकेति प्रकीर्तिता(तः)
प्रणवं भुवनेशानि वियच्चन्द्राग्निवायवम् ॥ ९६ ॥
भुवनेशीं ध्रुवं चैव सरस्वत्यै नमो लिखेत् ।
इयं तु पारिजातेशी पारिजाततरतोपमा ॥ ९७ ॥
काण्डबानेश्वरीविद्या प्रसङ्गात्कथिता मया ।
त्रिबीजं च पराबीजं सकामा त्रिपुटोदिता ॥ ९८ ॥
पञ्चकामेश्वरीविद्या बालान्यासे समीरिता ।
वाग्भवं वामनेत्र च ध्रुवान्तं बिन्दुसंयुतम् ॥ ९९ ॥
मूलपीठेश्वरीविद्या सुगुप्ता कथिता मया ।
पराबीजं तु श्रीबीज बालायामाद्यमक्षरम् ॥ १०० ॥
राज्यदे राजलक्ष्मीति चन्द्रः सर्गविभूषितः ।
विलोमन्यादिबीजानि सुधा श्रीश्च प्रकीर्तिताः(ता) ॥ १०१
वाग्भवं भुवनेशानि श्रीबीजं तदनन्तरम् ।
वियत्तदादिखफलेमित्यवर्णं समालिखेत् ॥ १०२ ॥
वियत्तदादिकं तं च फ्रानित्येव मनुर्मतः ।
चवर्गतृतीयं तुर्यं मायारेफेन्दुसंयुतम् ॥ १०३ ॥
महाचण्डं समुद्धृत्य संकर्षणीति संलिखेत् ।
कालमहान इत्युक्त्वा वियदिन्दुसमन्वितः(?) ॥ १०४ ॥
मायाबीजं तु कथितः सिद्धलक्ष्म्या महामनुः ।
अन्नपूर्णा च देवेशि उत्तराम्नायकीर्तिता ॥ १०५ ॥
मातङ्गिन्येति चांशं वाङ्मायाश्रीसंपुटं लिखेत् ।
इयं मातङ्गिनी विद्या द्वादशार्णा प्रकीर्तिता ॥ १०६ ॥
वियदग्निसमायुक्ता वामनेत्रविभूषितम् (ता) ।
भुवनेशी महेशानि दुर्लभा भुवनत्रये ॥ १०७ ॥

वाग्भवं पूर्वमुद्धृत्य संबुद्ध्या भगवत्यपि ।
वार्ताली द्वे च वाराही युग्मवाराहमुख्यपि ॥ १०८ ॥
अन्धे अन्धिन्यै नत्यन्तं रुन्धिनी तत्परः परम् ।
जम्भे जम्भिन्यै नत्यन्तं मोहे मोहिन्यै युतं नमः ॥ १०९ ॥
स्तम्भे स्तम्भिन्यै हृद्युक्तममुकं स्तम्भनद्वये ।
सर्वदुष्टप्रदुष्टानां सर्वेषां सर्वमुच्चरेत् ॥ ११० ॥
जिह्वास्तम्भं कुरु द्वंद्वं शीघ्रवश्यं कुरु द्वयम् ।
वाग्यूटचत्रयं वाच मन्त्रपावकवल्लभा ॥ १११ ॥
महाविद्येयमाख्याता सर्वतन्त्रेषु गोपिता ।

श्रीदेव्युवाच—

मन्त्रास्तु कथिता देव सर्वतन्त्रेषु गोपिताः ॥ ११२ ॥
तानाराध्य कथं लोका जायन्ते भुवि दुर्लभाः ।
एतत्सर्वं महादेव कथय त्वं सुविस्तरम् ॥ ११३ ॥

श्रीईश्वर उवाच—

साधु पृष्टं त्वया भद्रे लोकानां हितकाम्यया ।
अविज्ञातमनस्तत्त्वं भजना दुःखुला पथा (?)॥ ११४ ॥
कथ्यतेऽत्र तथा देवि सर्वतन्त्रेषु गोपितम् ।
मन्त्राविशोधनं कुर्यान्मन्त्राणां च विशुद्धये ॥ ११५ ॥
चतुरस्रभुवं भित्त्वा कृत्वा रेखात्रयं त्रयम् ।
वृतः षोडशके चैव ततो वर्णान्समालिखेत् ॥ ११६ ॥
इन्द्राग्निरुद्रनवनेत्रयुगेन दिक्षु
 ऋत्वष्टषोडशचतुर्दशभौक्तिकेषु ॥
पातालपञ्चदशवह्निहिमांशुकोष्ठे
 वर्णांल्लिखेल्लिपिभवान्क्रमशस्तु धीमान् ॥ ११७ ॥
मन्त्राद्यसाधकानां तु नामार्णः पतति ध्रुवम् ।
सिद्धिस्थावर्णविज्ञेयं द्वितीयं साध्यनामकम् ॥ ११८ ॥
सुसिद्धं तु तृतीयं स्याच्चतुर्थमरिसंज्ञकम् ।
सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ॥११९॥
सुसिद्धस्तत्क्षणादेव साधकं भक्षयेदरिः ।
सिद्धसिद्धो जपात्सिद्धिर्द्विगुणात्सिद्धसाध्यकः ॥ १२० ॥

सिद्धसुसिद्धः संग्राहात्सिद्धारिर्हन्ति वै द्विजान् ।
साध्यः सिध्यति संक्लेशात्साध्यसाध्योऽतिदुःखकृत्॥१२१॥
साध्यः सुसिद्धो भजनात्साध्यारिः स्वाश्रयं हरेत् ।
सुसिद्धसिद्धोऽध्ययनात्फलं दद्युर्यथेप्सितम् ॥ १२२ ॥
सुसिद्धसाध्यो जपाद्यैः सिद्धिर्यस्मादतोऽन्यथा ।
सुसिद्धे तु सुसिद्धस्तु पूर्वजन्मकृतश्रमात् ॥ १२३ ॥
तस्मात्तु सर्वं सिद्धानां साधको यो जपेन्मनुः ।
अभिचारे रिपोरेवं यदि स्मान्भुविपन्नयोः (?)॥ १२४ ॥
ससिद्धेऽरिविशेषेण स्वकुलान्नाशयेद्ध्रुवम् (?)।
अरिसिद्धस्तु संहन्यादरिसाध्यं तु योषितः ॥ १२५ ॥
अरिसिद्धस्वमन्त्रश्च कुलाच्छादनकृच्छलैः ।
अर्यरिस्वामहामन्त्रप्राप्तेन सुनिश्चितम् (?)॥ १२६ ॥
एतदुक्तं महेशानि त्यक्त्वाऽन्यमतमुत्तमम् ।
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे त्रिबीजके ॥ १२७ ॥
सिद्धादिशोधनं देवी न वै तेषां तु विद्यते ।
श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरि ॥ १२८ ॥
महाकोशेश्वरावृन्दमण्डितासनसंस्थिता ॥ १२९ ॥
सर्वसौभाग्यजननीपादुकां पूजयामि च ।
इत्युच्चार्य परं ज्योतिःकोशाद्यां पूजयेत्सुधीः ॥ १३० ॥
अनेनैव प्रकारेण पूजयेत्पञ्चपाञ्चिकाः ।
शैवं तु दर्शनं देवि बैन्दवे पूजयेत्प्रिये ॥ १३१ ॥
परितो * दर्शनं शाक्तं चक्रस्य परमेश्वरी ।
ब्राह्मं तु दर्शनं पूज्यं भूबिम्बे प्रथमे प्रिये ॥ १३२ ॥
शिवस्य वामतो देवि वैष्णवं दर्शनं यजेत् ।
सृष्टिचक्रे भवेत्सूर्यदर्शनं कमलेक्षणे ॥ १३३ ॥
स्थितिचक्रे तु संपूज्य बौद्धदर्शनमुत्तमम् ।
एवं संपूज्य सकलं श्रीविद्यां परितोषयेत् ॥ १३४ ॥
तर्पणानि पुनर्दद्यात्त्रिवारं तत्त्वमुद्रया ।
अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ॥ १३५ ॥

---

* अयं श्लोकः ख. पुस्तकस्थः ।

---

१ ख. °रिपूजये° ।

मायालक्ष्मीमयं बीजयुग्मं पूर्वक्रमेण तु ॥ १३८ ॥
कथितं योजयेद्देवि त्रयं वा परमेश्वरि ।
संपुटक्रमयोगेण चाथवा वीरवन्दिते ॥ १३९ ॥
संयोज्य पूजयेत्सर्वाः क्रमादेव वरानने ।
त्रैलोक्यमोहने चक्रे प्रकटा योगिनीर्यजेत् ॥ १४० ॥
चतुरस्रे चतुर्द्वारे शोभिते सिद्धिदायकाः ।
अणिमां पश्चिमद्वारे दक्षभागे प्रपूजयेत् ॥ १४१ ॥
लघिमामुत्तरद्वारे दक्षभागे प्रपूजयेत् ।
पूर्वद्वारे तु महिमामुत्तरे पूजयेत्प्रिय ॥ १४२ ॥
ईशित्वसिद्धिर्देवेशि दक्षिणाद्वारि पूर्ववत् ।
वशित्वसिद्धिं वायव्ये तेनैव क्रमतो यजेत् ॥ १४३ ॥
प्राकाम्यसिद्धिमीशाने तेनैव क्रमतो यजेत् ।
भुक्तिसिद्धिस्तथाऽऽग्नेये तेनैव क्रमयोगतः ॥ १४४ ॥
इच्छासिद्धिं पूर्वभागे नैर्ऋत्ये च प्रपूजयेत् ।
प्राप्तिसिद्धिः सर्वकामा सिद्धिश्च परमेश्वरि ॥ १४५ ॥
अधोर्ध्वक्रमरूपेण ज्ञातव्ये सुरसुन्दरि ।
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ॥ १४६ ॥
वाराही च तथा षष्ठी चामुण्डा सप्त मातरः ।
अष्टमी तु महालक्ष्मीः पश्चिमादिक्रमेण हि ॥ १४७ ॥
वामभागे तु संपूज्या वायव्यादि च पूर्ववत् ।
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ॥ १४८ ॥
खेचरीबीजयोन्याख्यास्त्रिखण्डां च प्रपूजयेत् ।
एताः संपूज्य चक्रेशीं त्रिपुरां पूजयेत्पराम् ॥ १४९ ॥
अणिमासिद्धिपुरतः सर्वकार्यार्थसाधिकाम् ।
सर्वसंक्षोभिणीं मुद्रां दर्शयेत्कमलानने ॥ १५० ॥

---

१ ख. °वि भ्रामयं प° इति पाठान्तरम् । २ ख. संपूज्य° । ३ ख. °रे पश्चिमे पूजयेत्ततः । पू°

सर्वाशापूरकं चक्रं गुप्तयोगिन्यधिष्ठितम् ।
षोडशारं ततो देवि पूजयेत्कार्यसिद्धये ॥ १५१ ॥
कामाकर्षिणिकां देवि बुध्याकर्षिणिकां तथा ।
अहंकाराकर्षिणीं च शब्दाकर्षणरूपिणीम् ॥ १५२ ॥
स्पर्शाकर्षिणिरूपां च रूपाकर्षिणिरूपिणीम् ।
रसाकर्षकरीं चैव गन्धाकर्षणकारिणीम् ॥ १५३ ॥
चित्ताकर्षिणिकां तद्वद्धैर्याकर्षिणिकां प्रिये ।
नामाकर्षिणिकां चैव बीजाकर्षिणिकां तथा ॥ १५४ ॥
अमृताकर्षिणीं चैव स्मृत्याकर्षिणिकां प्रिये ।
शरीराकर्षिणीं चैव आत्माकर्षणरूपिणीम् ॥ १५५ ॥
पश्चिमादिविलोमेन षोडशारे स्वरान्विताः ।
एता नित्याः कलाः पूज्याः स्रवत्पीयूषमण्डलाः ॥ १५६
चक्रेश्वरीं यजेद्देवीं त्रिपुरेशीं समृद्धिदाम् ।
कामाकर्षणरूपायाः पुरतः पूजयेत्प्रिये ॥ १५७ ॥
सर्वविद्राविणीं मुद्रां दर्शयित्वा निवेदयेत् ।
सर्वसंक्षोभणे चक्रे यजेद्गुप्ततराभिधाः ॥ १५८ ॥
अनङ्गकुसुमां प्राच्यां कवर्गेण प्रपूजयेत् ।
दक्षिणे च चवर्गेण तथा चानङ्गमेखलाम् ॥ १५९ ॥
अनङ्गमदनां पश्चाट्टवर्गेण प्रपूजयेत् ।
तवर्गेणोत्तरे पश्चादनङ्गमदनातुराम् ॥ १६० ॥
अनङ्गरेखामाग्नेये पवर्गेण प्रपूजयेत् ।
राक्षसेऽनङ्गवेगां तु यवर्गेण प्रपूजयेत् ॥ १६१ ॥
वायव्ये तु शवर्गेण तथाऽनङ्गाङ्कुशां यजेत् ।
ईशान्ये लक्षवर्गेण पूज्याऽनङ्गादिमालिनी ॥ १६२ ॥
चक्रेश्वरीं यजेद्देवीं ततस्त्रिपुरसुन्दरीम् ।
अनङ्गकुसुमाग्रे च सर्वसाम्राज्यदायिनीम् ॥ १६३ ॥
सर्वाकर्षणमुद्रां च दर्शयेत्सुरवन्दिते ।
चक्रपूजां निवेद्याथ चतुर्थं चक्रमर्चयेत् ॥ १६४ ॥
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ।
सर्वाकर्षिणिका शक्तिः सर्वाह्लादनकारिणी ॥ १६५ ॥

चतुर्दशारे शक्तिस्तु सर्वद्वंद्वक्षयंकरी ॥ १६८ ॥
सर्वसौभाग्यदे चक्रे पश्चिमादिविलोमतः ।
वाममार्गेण देवेशि संपूज्याः सर्वसिद्धिदाः ॥ १६९ ॥
सर्वसंक्षोभिणी शक्तिः पुरतः पूजयेत्ततः ।
चक्रेश्वरीं सिद्धिदात्रीं परां त्रिपुरवासिनीम् ॥ १७० ॥
वश्यमुद्रां प्रदर्श्याथ निवेद्य तदनन्तरम् ।
सर्वार्थसाधके चक्रे दशारे कुलयोगिनीः ॥ १७१ ॥
पूजयेत्सर्वकार्यार्थसिद्धिदाः पश्चिमे क्रमात् ।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ॥ १७२ ॥
सर्वप्रियकरी देवी सर्वमङ्गलकारिणी ।
सर्वकामप्रपूर्णा च सर्वदुःखप्रमोचनी ॥ १७३ ॥
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवि सर्वसौभाग्यदायिनी ॥ १७४ ॥
पश्चिमादिविलोमेन दशारे पूजयेदिमाः ।
सर्वसिद्धिप्रदा देवि पुरतश्चक्रनायिकाम् ॥ १७५ ॥
सर्वसिद्धिप्रदां देवि पूजयेत्त्रिपुराश्रियम् ।
सर्वोन्मादनमुद्रां च दर्शयित्वा निवेद्य च ॥ १७६ ॥
सर्वरक्षाकरे चक्रे निगर्भा योगिनीर्यजेत् ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा ततः ॥ १७७ ॥
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ १७८ ॥
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।
सर्वेप्सितार्थफलदा देव्यः सर्वसमृद्धिदाः ॥ १७९ ॥
पश्चिमादिविलोमेन पूजयेत्पङ्क्तियोनिके ।
सर्वज्ञापुरतो देवि चक्रेशीं मालिनीं यजेत् ॥ १८० ॥

---

१ क. °रतः क्रमना° । २ क °श्चक्रिनायिकाम् । ष° ।

महाङ्कुशां महामुद्रां दर्शयित्वा निवेद्य च ।
मध्यचक्रे महेशानि योगिनीः पूजयेत्प्रिये ॥ १८१ ॥
सर्वरोगहरे चक्रे वसुकोणे सुरेश्वरि ।
रहस्ययोगिनीर्देवि वशिन्याद्यास्तु सिद्धिदाः ॥ १८२
पश्चिमादिविलोमेन पूर्वोक्ताः पूजयेत्क्रमात् ।
वशिनीपुरतः पूज्या सिद्धाम्बा चक्रनायिका ॥ १८३ ॥
खेचरीं दर्शयेन्मुद्रां निवेद्यानन्तरं ततः ।
सर्वसिद्धिप्रदे चक्रे त्रिकोणे सर्वकामदे ॥ १८४ ॥
परापररहस्याख्ययोगिनीः परिपूजयेत् ।
पञ्च बाणान्समुच्चार्य कामकामेश्वरीमयान् ॥ १८५ ॥
जम्भनाख्यान्महेशानि पूजयेद्बाणदेवताम् ।
धमात्मकं कामचापं द्वितीयं तु थमात्मकम् ॥ १८६ ॥
कामेश्वर्या मोहनाख्यां पूजयेच्चापदेवताम् ।
द्वितीयं भुवनेशानीपाशयुग्मं वशंकरम् ॥ १८७ ॥
कामेशस्य च कामेश्यास्त्रैलोक्याकर्षणं प्रिये ।
अङ्कुशाख्यं क्रोमात्मबीजं स्तम्भनसंज्ञकम् ॥ १८८ ॥
कामेशस्य च कामेश्या अङ्कुशं पूजयेत्प्रिये ।
षडङ्गावरणाद्बाह्ये समीपे क्रमतो यजेत् ॥ १८९ ॥
पश्चिमादिक्रमेणैव चतुर्दिक्षु प्रपूजयेत् ।
कामेश्वरीं रुद्रशक्तिमाद्यकूटेन चाग्रतः ॥ १९० ॥
द्वितीयेन च कूटेन कामाख्येन च वैष्णवीम् ।
दक्षकोणे समभ्यर्च्य तृतीयेन च पूजयेत् ॥ १९१ ॥
भगमालां ब्रह्मशक्तिमुत्तरे विश्वमातृकाम् ।
चक्रेश्वरीमम्बिकाख्यां कामेशीपुरतो यजेत् ॥ १९२ ॥
बीजमुद्रामुपास्याथ चक्रपूजां निवेदयेत् ।
सर्वानन्दमये चक्रराजे बैन्दवसंज्ञके ॥ १९३ ॥
ब्रह्मरूपे चित्स्वरूपे संविद्रूपे शृणु प्रिये ।
परापररहस्याख्यां योगिनीं त्रिपुरां यजेत् ॥ १९४ ॥

---

१ ख. °र्षणक्षमम् । २ ख. °न बक्राख्यां शक्तिवै° ।

सर्वाम्नायेश्वरीं विद्यालंकृतां ब्रह्मरूपिणीम् ॥ १९७ ॥
उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ १९८ ॥
योनिमुद्रां प्रदर्श्याथ मुद्राः संदर्शयेत्क्रमात् ।
वनस्पतिरसोत्पन्नैः पवित्रै रम्यगन्धिभिः ॥ १९९ ॥
दशाङ्गाद्यैर्धूपवर्यैर्धूपयेत्परमेश्वरीम् ।
( *कस्तूरीकुङ्कुमं देवि गुग्गुलं शालसंभवम् ॥ २०० ॥
चन्दनागरुकर्पूरसिताज्यमधुसंयुतम् ।
धूपयेद्देशिको नित्यं सर्वसौभाग्यसिद्धये ॥ २०१ ॥
धूपमन्त्रेण देवेशि त्रैलोक्यस्यापि दुर्लभम् । )
अभितो वेदिकाचक्रं दीपमाला घृतप्लुताः ॥ २०२ ॥
कर्पूररचिताश्चापि तैलपूर्णास्तु वा यजेत् ।
धूपदीपौ निवेद्याथ तर्पयेत्पूर्ववत्प्रिये ॥ २०३ ॥
आरार्तिकाविधिं कुर्यात्पूर्ववद्देववन्दिते ।
अन्यदारार्तिकं वक्ष्ये सर्वकामप्रपूरकम् ॥ २०४ ॥
स्वर्णादिनिर्मिते पात्रे मध्ये चक्रं लिखेद्बुधः ।
तण्डुलोल्लासितं कृत्वा नवधा कारयेत्ततः ॥ २०५ ॥
नव गोलांश्चन्द्ररूपान्विरच्य तदनन्तरम् ।
शर्करागर्भभरितान्मण्डकान्युग्मरूपकान् ॥ २०६ ॥
विरच्य घटिकाः कार्या योजयित्वा तु सप्तकम् ।
सप्तसप्तप्रकारेण घटिका नव योजयेत् ॥ २०७ ॥
अष्टकोणेषु संस्थाप्य गोलकांश्चोपरि क्षिपेत् ।
चणमुद्रा विकीर्याथ दीपकान्घृतपाचितान् ॥ २०८ ॥

---

* धनुश्चिन्हान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति.

---

१ क. °र्ये श्रीविद्यां च स्व° । २ ख. °रवार्तिकाश्चा° इति पाठान्तरम् । ३ क. °धः । अति-
दिनं कृ° । ४ ख. °कान्कुलनायिके । वि° । ५ ख. °न् । स्व् स्तिका °इति पाठान्तरम् ।

मुष्टिकाकृतिमुष्टिश्च स्थापयेत्तत्र तत्र तु ।
दीपान्प्रज्वाल्य पश्चात्तु पञ्चरत्नैः प्रपूजयेत् ॥ २०९ ॥
पञ्चसिंहासनगता विद्यास्तत्र प्रपूजयेत् ।
आमस्तकं समुद्धृत्य नववारं पुनः पुनः ॥ २१० ॥
नवावरणवद्देवि[1] परिभ्राम्य पुनः पुनः ।
उत्तीर्य स्थापयेत्पश्चाद्दीपमालामयं महः ॥ २११ ॥
नेत्रयोः सुस्थिरं ध्यायेदारार्तिकविधिः प्रिये ।
नैवेद्यं षड्रसोपेतं सितापूपादिसंयुतम् ॥ २१२ ॥
शर्करापूरभरितमण्डकैः पायसान्वितम् ।
मुक्ताकर्पूरधवलं शुद्धौदनसुपूरितम् ॥ २१३ ॥
घृतकर्पूरशोभाढ्यं संपूर्णघृतमण्डितम् ।
नानाव्यञ्जनशोभाढ्यं वटकैः कुङ्कुमप्रभैः[2] ॥ २१४ ॥
मापान्नभरितं नानारसपानविराजितम् ।
घृतक्षीरेण भरितं चतुर्मुद्राविराजितम्[3] ॥ २१५ ॥
संकल्प्य परमेशान्यै नित्यहोमविधिं चरेत् ।
मूलेन प्राणसहिता आहुतीः पञ्च होमयेत् ॥ २१६ ॥
षडाहुतीः षडङ्गानां नित्यहोमः प्रकीर्तितः ।
उपविश्याऽऽसने रम्ये वामभागे ततः परम् ॥ २१७ ॥
बद्धकरोर्ध्वपुटतः साधको भूमिजानुकः ।
मण्डलं चतुरस्रं तु तन्मध्ये विलिखेत्प्रिये ॥ २१८ ॥
त्रिकोणमध्ये[4] व्योमाख्यं मण्डलं पूजयेत्ततः ।
व्यापकान्ते मण्डलाय हृदन्तो वाग्भवं परम्[5] ॥ २१९ ॥
मुखे कृत्वा पूजनीयं मण्डलं मनुना प्रिये ।
एतन्मण्डलमभ्यर्च्य मण्डलानां चतुष्टयम् ॥ २२० ॥
ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् ।
मण्डलानि विधायाथ पूर्ववत्पूजयेत्प्रिये ॥ २२१ ॥
पूर्ववद्बलिदानं च दद्यात्सर्वसमृद्धये ।
बटुकाय महेशानि योगिनीभ्यश्च वल्लभे ॥ २२२ ॥

---

१ क. ग. °णदेवीनो प° । २ ख. °प्रभम् । मा° । ३ स. °तुर्धा तद्विरा° । ४ ख. °[illegible]
क्षो° । ५ ख. पराम् । 'प्रिये' इति पाठान्तरम् ।

क्षेत्रपालगणेशाभ्यां पूर्ववद्बलिमुत्सृजेत् ।
वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ॥ २२३ ॥
आधारं पूजयेत्तत्र पात्रं चान्नोदकान्वितम् ।
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ॥ २२४ ॥
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ।
तारं च भुवनेशानि सर्वविघ्नपदं ततः ॥ २२५ ॥
कृद्भ्यश्च सर्वभूतेभ्यो हुंकारं वह्निवल्लभाम् ।
समुच्चरन्बलिं दद्यान्मुद्रया तत्त्वसंज्ञया ॥ २२६ ॥
बलिपञ्चकमाख्यातं सर्वरक्षाकरं सताम् ।
एकत्र वा पञ्च बलीन्दद्याद्यापकमण्डले ॥ २२७ ॥
वामभागे स्थितो देवि सर्वविघ्नहरो भवेत् ।
चक्रमभ्यर्च्य सकलं विधिवत्परमेश्वरि ॥ २२८ ॥
श्रीगुरोः कृपया देवि सर्वज्ञः सर्वतत्त्ववित् ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे उमामहेश्वरसंवादे श्रीविद्यायजनविधिर्नाम षोडशः पटलः ॥ १६ ॥

---

## अथ सप्तदशः पटलः ।

---

श्रीदेव्युवाच—

देवदेव महादेव अश्रुतार्थं महेश्वर ।
षोडशाक्षरविद्यायाः श्रीचक्रविधिमुत्तमम् ॥ १ ॥
जपादिकं च यत्सर्वमेकैकाक्षरसाधनम् ।
कथयस्व महेशान यद्यहं तव वल्लभा ॥ २ ॥

ईश्वर उवाच—

शृणु सर्वाङ्गसुभगे श्रीविद्याविधिमुत्तमम् ।
यस्य विज्ञानमात्रेण कर्ता हर्ता स्वयं विभुः ॥ ३ ॥
अनेन विधिना यत्र श्रीचक्रं क्रमसंयुतम् ।
पूज्यते तत्र सकलं वशी कुर्यान्न संशयः ॥ ४ ॥
नगरं वशमायाति देशमण्डलमद्रिजे ।
योषितः सकला वश्या ज्वलत्कामाग्निपीडिताः ॥ ५ ॥

---

१ ख. 'शानीं स° । २ ख. सदा र° । ३ ख. 'लीन्प्रदद्यादेकम° । ४ ख. हरिः ।

विद्याविमूढहृदयाः साधकन्यस्तमानसाः ।
तद्दर्शनेन देवेशि जायन्ते सर्वयोषितः ॥ ६ ॥
अक्षमालां समाश्रित्य मातृकावर्णरूपिणीम् ।
अथ मुक्ताफलमयी वाङ्मोक्षफलदायिनी ॥ ७ ॥
सर्वसिद्धिप्रदा नित्यं सर्वराजवशंकरी ।
यथा मुक्ताफलमयी[1] तथा स्फटिकनिर्मिता ॥ ८ ॥
रुद्राक्षमालिका मोक्षे सर्वसंपत्समृद्धिदा ।
प्रवालमाला वश्ये तु सर्वकार्यार्थसाधिका ॥ ९ ॥
माणिक्यमाला फलदा साम्राज्यफलदायिनी[2] ।
पुत्रजीवकमाला[3] तु विद्यालक्ष्मीप्रदा सताम् ॥ १० ॥
पद्माक्षमालया लक्ष्मीर्जायते महती परा ।
रक्तचन्दनमाला तु सर्वभोगप्रदायिनी ॥ ११ ॥
अक्षमालां प्रपूज्याथ चन्दनेन विलेपिताम् ।
समाश्रित्य जपेद्विद्यां लक्षमात्रं यदा बुधः ॥ १२ ॥
योषितो भ्रमयन्त्येव मनस्तस्य सुनिश्चलम् ।
तदा द्वितीयलक्षं तु प्रजपेत्साधकोत्तमः ॥ १३ ॥
पातालतलनागेन्द्रकन्यकाः क्षोभयन्ति तम्[4] ।
तासां कटाक्षजालैस्तु न मोहं याति साधकः ॥ १४ ॥
तदा लक्षत्रयं कुर्यात्साधकः स्थिरमानसः ।
तृतीयलक्षे संप्राप्ते द्रावयन्ति सुराङ्गनाः ॥ १५ ॥
अभिमानेन सौन्दर्यात्सौभाग्यमदकारिणः ।
साधकं द्रावयन्त्येव ततश्चासौ मनःस्थिरः ॥ १६ ॥
तदा लक्षत्रयं साधु सर्वपापनिकृन्तनम् ।
एवं लक्षत्रयजपेद्व्रतस्थः स्वस्थमानसः ॥ १७ ॥
संक्षोभयति भूर्लोकस्वर्लोकतलवासिनः ।
पुरुषा योषितो वश्याश्चराचरमपि प्रिये ॥ १८ ॥
गोरोचनादिभिर्द्रव्यैश्चक्रराजं समालिखेत् ।
अतीव सुन्दरं रम्यं तन्मध्ये प्रतिमां वराम् ॥ १९ ॥

---

१ ख. °क्षे भवेत्सर्वस° । २ क. ग. °म्राज्या शिल्पदा° । ३ ख. तु भोगदा वश्यदा अ° । ४ घ. ग. °यन्त्यसु° ।

ज्वलन्तीं नामसहितां महाबीजाविदर्भिताम् ।
चिन्तयेत्तु ततो देवि योजनानां सहस्रतः ॥ २० ॥
अदृष्टपूर्वा देवेशि श्रुतमात्राऽपि दुर्लभा ।
राजकन्याऽथ वा चार्वी भयलज्जाविवर्जिता ॥ २१ ॥
आयाति साधकं सम्यग्मन्त्रमूढा सती प्रिये ।
चक्रमध्यगतो भूत्वा साधकश्चिन्तयेद्यदा ॥ २२ ॥
उद्यत्सूर्यसहस्राभमात्मानमरुणं तथा ।
साध्यमप्यरुणीभूतं कृत्वा मन्त्रं जपेद्बुधः ॥ २३ ॥
अनेन क्रमयोगेण स्वयं कन्दर्परूपवान् ।
सर्वसौन्दर्यसुभगः कामिनीवल्लभो भवेत् ॥ २४ ॥
सर्वलोकेषु सुभगः सर्वलोकवशंकरः* ।
सर्वरक्तोपचारैस्तु मुद्रासंनद्धविग्रहः ॥ २५ ॥
चक्रं प्रपूरयेद्यस्तु यस्य नाम विदर्भितम् ।
स भवेद्दासवद्देवि धनाढ्यो वाऽपि भूपतिः ॥ २६ ॥
चक्रमध्यगतं कुर्यान्नाम यस्यास्तु योषितः ।
अदृष्टाया महेशानि योनिमुद्राधरो बुधः ॥ २७ ॥
हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् ।
नागकन्यामप्सरसं खेचरीं वा सुराङ्गनाम् ॥ २८ ॥
विद्याधरीं दिव्यरूपामृषिकन्यां रिपुस्त्रियम् ।
मदनोद्भवसंतापां स्फुरज्जघनमण्डलाम् ॥ २९ ॥
कामबाणप्रभिन्नान्तःकरणां लोलचक्षुषाम् ।
महाकामकलाध्यानयोगात्तु सुरवन्दिते ॥ ३० ॥
क्षोभयेत्स्वर्गभूर्लोकपातालतलयोषितः ।
रोचनाभागमेकं तु भागमेकं तु कुङ्कुमम् ॥ ३१ ॥
अथ भागद्वयं देवि चन्दनं मर्दयेत्समम् ।
एकत्र तिलकं कुर्यात्त्रैलोक्यवशकारिणम् ॥ ३२ ॥
अष्टोत्तरशतावृत्त्या मन्त्रयित्वा वशं नयेत् ।
राजानं नगरं ग्रामं तेन यद्यत्प्रदृश्यते ॥ ३३ ॥

---

* वशंकर इत्यस्याग्रे–साधकानां हितार्थाय सर्वार्थसाधनं प्रिये, इतीदमर्धं ख. पुस्तके वर्तते ।

---

१ क. °पूजये° ।

मन्त्रिणा परमेशानि तत्सर्वं तस्य वश्यगम् ।
ताम्बूलं धूपमुदकं पत्रं पुष्पं फलं दधि ॥ ३४ ॥
दुग्धं घृतं चूर्णमन्नं वस्त्रं कर्पूरमेव च ।
कस्तूरी घुसृणं चैला लवङ्गं जातिपत्रकम् ॥ ३५ ॥
फलं वा वस्तु यद्यत्तु सकलं परमेश्वरि ।
शतमष्टोत्तरं जप्त्वा यस्मै कस्मै प्रयच्छति ॥ ३६ ॥
स वश्यो जायते देवि नात्र कार्या विचारणा ।
स्त्रियस्तु सकला वश्या दासीभूता भवन्ति हि ॥ ३७ ॥
जगत्कर्षणमेतत्तु कथितं नान्यथा भवेत् ।
रहस्यस्थानके मन्त्री लिखेद्रोचनया भुवि ॥ ३८ ॥
चारुशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ।
प्रतिमां सुन्दरां गीतां विलिख्य सुमनोहराम् ॥ ३९ ॥
तन्द्भालकण्ठहृन्नाभिजन्ममण्डलयोजिताम् ।
जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ॥ ४० ॥
सर्वसंधिषु देहस्य मदनाक्षरमालिखेत् ।
लीनं दाडिमपुष्पाभं चिन्तयेद्देहसंधिषु ॥ ४१ ॥
तदाशाभिमुखो भूत्वा स्वयं देवस्वरूपकः ।
मुद्रां तु क्षोभिणीं बद्ध्वा मन्त्रमष्टशतं जपेत् ॥ ४२ ॥
नियोज्य मदनागारे चन्द्रसूर्यकलात्मके ।
ततो विकलसर्वाङ्गीं कामबाणैः प्रपीडिताम् ॥ ४३ ॥
अनन्यमानसां प्रेमभ्रममाणां मदालसाम् ।
एवमाकर्षयेन्नारीं योजनानां शतादपि ॥ ४४ ॥
मातृकां विलिखेच्चक्रबाह्यतः सकलां प्रिये ।
भूर्जपत्रे स्वर्णपत्रे रौप्यपत्रेऽथ ताम्रजे ॥ ४५ ॥
अवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ।
तथैव मातृकायुक्तस्वसंज्ञाचक्रमण्डितः ॥ ४६ ॥
कर्पूरकुङ्कुमाद्यैस्तु अजरामरतां लभेत् ।
अनेन विधिना देवि रोचनागरुकुङ्कुमैः ॥ ४७ ॥

---

१ ख. हि । हठाकर्ष° । २ ख. °वांवर° । ३ ख. °भिगतामानय यो° । ४ क. °ज्य [illegible]
नागा° । ५ क. °णामभ्रम° । ६ ख. °द चन्दनैः । लिखितं च° ।

विलिखंश्चक्रयोगेण साध्यनाम वरानने ।
विदर्भितं स्वनाम्ना तु यस्मिन्कस्मिन्नपि स्थितम् ॥ ४८ ॥
स्थावरं जङ्गमं चापि सकलं जनमण्डलम् ।
वशी कुर्यान्महेशानि पादाक्रान्तं न संशयः ॥ ४९ ॥
महात्रिपुरसुन्दर्याः कामकूटेन भास्वता ।
एकमेकमवष्टभ्य साध्यनामाक्षराणि च ॥ ५० ॥
बहिरप्यखिलैर्वर्णैर्मातृकायाः प्रवेष्टयेत् ।
हेममध्यगतं कुर्याच्छिखायां वामके भुजे ॥ ५१ ॥
धारयेद्यत्र कुत्रापि त्रैलोक्यवशकारकम् ।
राजेन्द्रमपि देवेशि दासभूतं करोति हि ॥ ५२ ॥
राजानो वाजिनः सर्पा गजा दुष्टा मदोत्कटाः ।
व्याघ्राः केसरिणो मत्ता वश्यास्तस्य भवन्ति हि ॥ ५३ ॥
पूर्वक्रमेण नगरनाम संदर्भ्य शैलजे ।
मध्ये चतुष्पथे वाऽपि चतुर्दिक्षु निधापयेत् ॥ ५४ ॥
महाक्षोभो योषितां तु जनानां महतामपि ।
तथैव सर्वदुष्टानां पुरस्थानां च जायते ॥ ५५ ॥
एतन्मध्यगतां पृथ्वीं सशैलवनगह्वराम् ।
ज्वलन्तीं सर्वराजेन्द्रमण्डितां सागराम्बराम् ॥ ५६ ॥
मासषट्कं चिन्तयेद्यः साक्षात्कामोपमो भवेत् ।
कटाक्षक्षेपमात्रेण नार्यस्तस्य वशाः प्रिये ॥ ५७ ॥
राजानो ब्राह्मणा वैश्याः शूद्राश्च पशवो जगत् ।
दृष्ट्वा त्वाकर्षयेद्देवि त्रैलोक्यं सचराचरम्[1] ॥ ५८ ॥
सपत्नान्नाशयेद्दृष्ट्वा नात्र कार्या विचारणा ।
भूतप्रेतपिशाचांश्च ज्वरांश्चातुर्थिकादिकान् ॥ ५९ ॥
शूलगुल्मादिरोगांश्च दृष्ट्वा नाशयते क्षणात् ।
एतत्सिन्दूरसुभगं रात्रौ संपूजितं प्रिये ॥ ६० ॥
योजनानां शताद्वाऽपि सम्यगाकर्षयेत्स्त्रियम् ।
यदा दिक्षु विदिक्ष्वेवं[2] दिविष्ठानपि सुन्दरि ॥ ६१ ॥

---

१ ख. °म् । दृष्ट्वा विषं नाशयेत्स मा° । २ क. ख. °वं त्रिदिविष्ठं तु सु° ।

वशमानयते शीघ्रं सपुत्रपशुबान्धवान् ।
भूर्जपत्रे समालिख्य रोचनागरुकुङ्कुमैः ॥ ६२ ॥
तन्मध्ये नगरं देशं मण्डलं खण्डमेव च ।
नाम्ना विदर्भितं स्वस्य पूजयित्वा यथाविधि ॥ ६३ ॥
भूमिमध्यगतं कृत्वा त्रैलोक्यं वशमानयेत् ।
अथ वा धारयेत्कण्ठे शिखायां बाहुमूलके ॥ ६४ ॥
यत्र कुत्र स्थितं भद्रे क्षोभयेन्नगरं महत् ।
अर्कक्षीरेण संयुक्तं धत्तूरकरसं तथा ॥ ६५ ॥
रोचनाकुङ्कुमे चैव लाक्षालक्तकसंयुतम् ।
कस्तूरीचन्द्रसंयुक्तमेकीकृत्य ततः परम् ॥ ६६ ॥
चक्रमेतत्समालिख्य यस्य नाम्ना महेश्वरि ।
तस्य व्याघ्रगजव्याधिरिपुसर्पभयादिकम् ॥ ६७ ॥
चोरग्रहजलारिष्टशाकिनीडाकिनीभयम् ।
भयं न विद्यते देवि परमन्त्राभिचारजम् ॥ ६८ ॥
नित्यं संधारयेद्देवि कालमृत्युं विनाशयेत् ॥ ६९ ॥
अथवा मध्यगां देवीं त्रिकोणोभयमध्यगाम् ।
अथ स्वनामसंयुक्तां रोचनाकुङ्कुमाङ्किताम् ॥ ७० ॥
निधापयेच्च सप्ताहाद्दासवत्किंकरो भवेत् ।
पीतद्रव्यैः समालिख्य पीतपुष्पैः समर्चयेत् ॥ ७१ ॥
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत्सर्ववादिनः ।
सहस्रवदनो देवि मूढो भवति तत्क्षणात् ॥ ७२ ॥
नाम्ना यस्य स वाग्मी हि पाषाण इव जायते ।
चक्रं विलिख्य देवेशि महानीलीरसेन तु ॥ ७३ ॥
नाम संयोज्य विधिवद्दक्षिणाभिमुखो बुधः ।
वह्नौ दग्ध्वा महेशानि मारणं वैरिणां प्रिये ॥ ७४ ॥
महिषाश्वपुरीषाभ्यां सम्यगाघृष्य शैलजे ।
गोमूत्रेण च संलिख्य नामसंदर्भ्य पूर्ववत् ॥ ७५ ॥
क्षिप्त्वाऽऽरनालमध्यस्थं विद्वेषणकरं भवेत् ।
कृत्वा रोचनया नाम काकपक्षस्य मध्यगम् ॥ ७६ ॥
लम्बमानं तदाकाशे शत्रूच्चाटनकारकम् ।
महानीलीरोचनाभ्यां दुग्धलाक्षारसेन हि ॥ ७७ ॥

१ ख. °रोद्रवसं° । २ ख समीकृत्याथ शै° ।

एतन्मध्यगतां पृथ्वीं नगरीं वा सुलोचने ।
सप्ताहात्क्षोभयेत्सम्यग्ज्वलमानां विचिन्तयेत् ॥ ८० ॥
अथ वक्ष्ये महेशानि महापातकनाशनम् ।
शिवां संपूजयेद्देवि सुगन्धैः कुसुमैः प्रिये ॥ ८१ ॥
महापातकयुक्तात्मा तत्क्षणात्पापहा भवेत् ।
शमीदूर्वाङ्कुराश्वत्थपलाशैरथ वाऽर्कजैः ॥ ८२ ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।
पूर्वाशाभिमुखो भूत्वा पीतद्रव्यैः समर्चयेत् ॥ ८३ ॥
पीतस्थाने समालिख्य स्तम्भयेत्सर्ववादिनः ।
उत्तराशामुखो भूत्वा सिन्दूररजसा लिखेत् ॥ ८४ ॥
पूजयेद्विधिवद्विद्वान्सर्वलोकं वशं नयेत् ।
पश्चिमाभिमुखो भूत्वा चन्दनेन समालिखेत् ॥ ८५ ॥
संपूज्य विधिवद्विद्वान्सर्वयोषिन्मनो हरेत् ।
वल्लभो जायते देवि दासीमिव वशं नयेत् ॥ ८६ ॥
यमाशाभिमुखो भूत्वा चक्रं कृष्णं यदाऽर्चयेत् ।
यस्य नामाङ्कितं तस्य मन्त्रहानिः प्रजायते ॥ ॥ ८७ ॥
अग्निराक्षसवायव्यशंभुकोणेषु पूजितम् ।
पूर्ववत्परमेशानि क्रमेण परिपूजितम् ॥ ८८ ॥
स्तम्भविद्वेषणव्याधिशत्रूच्चाटकरं भवेत् ।
रोचनालिखितं चक्रं क्षीरमध्ये क्षिपेद्बुधः ॥ ८९ ॥
सर्ववश्यकरं देवि भवत्येव न संशयः ।
गोमूत्रमध्यगं सम्यक्शत्रूच्चाटकरं भवेत् ॥ ९० ॥
तैलस्थं चक्रराजं तद्विद्वेषणकरं भवेत् ।
ज्वलज्ज्वलनमध्यस्थं शत्रुनाशकरं भवेत् ॥ ९१ ॥
यदेकान्ते चतुर्मार्गे सिन्दूररजसा लिखेत् ।
सर्वबाह्यत आरभ्य यावन्मध्यं महेश्वरि ॥ ९२ ॥

अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ।
पूजयेद्रात्रिसमये कुलाचारक्रमेण तु ॥ ९३ ॥
साधकः खेचरो देवि जायते नात्र संशयः ।
गिरावेकतरौ तद्वदर्चयेत्कुलमार्गतः ॥ ९४ ॥
अजरामरतां लब्ध्वा सुखी भवति मान्त्रिकः ।
श्मशाने पूजयेच्चक्रं महाभूतदिने बुधः ॥ ९५ ॥
पूर्वक्रमेण विधिवत्साधकः स्थिरमानसः ।
खड्गसिद्धिं च वेतालसिद्धिं च गुटिकामपि ॥ ९६ ॥
पादुकां जनसिद्धिं च मनःसिद्धिं च धातुदाम् ।
महाविवरसिद्धिं च यक्षिणीचेटकोद्भवाम् ॥ ९७ ॥
सर्वं तल्लभते मन्त्री नात्र कार्या विचारणा ।
अथ वक्ष्ये महेशानि श्रीविद्यापूजनं महत् ॥ ९८ ॥
ब्रह्महत्यादिदोषाणां पुरश्चरणमुत्तमम् ।
रक्तपद्मैर्महेशानि पूजयेच्चक्रमुत्तमम् ॥ ९९ ॥
समस्तरश्मिसहितं नित्याम्नायपुरस्कृतम् ।
कुलाचारक्रमाद्देवि कर्पूरक्षोदमण्डितम् ॥ १०० ॥
मासमात्रेण देवेशि महापातककोटयः ।
जन्मान्तरकृताः सर्वा नाशयेन्नात्र संशयः ॥ १०१ ॥
लक्ष्मीस्तस्य गृहे रम्या सुस्थिरा सुरवन्दिते ।
जपापुष्पैर्महेशानि पूर्ववत्पूजयेच्छिवाम् ॥ १०२ ॥
मासमात्रं क्रमेणैव पूर्ववत्परमेश्वरि ।
ब्रह्महत्यादिपापांश्च पूर्वजन्मकृतान्प्रिये ॥ १०३ ॥
नाशयेन्नात्र संदेहो धनवाञ्जायते बुधः ।
केतकैस्तरुणैः पत्रैः पूर्ववत्पूजयेत्प्रिये ॥ १०४ ॥
उपपातकसंघांश्च मासमात्रेण नाशयेत् ।
सौभाग्यमतुलं तस्य जायते नात्र संशयः ॥ १०५ ॥
शतपत्रैर्मनोरम्यैः पूजयेन्मासमात्रकम् ।
पूर्ववत्परमेशानि पूर्वपापं विनाशयेत् ॥ १०६ ॥
चम्पकैः सुमनोरम्यैः पूर्ववत्पूजयेच्छिवाम् ।

---

१ क. °द्र । मक्षप° । २ क. °श्च साज° ।

मासमात्रेण हन्त्येव पातकाञ्शतजन्मजान् ॥ १०७ ॥
सौभाग्यवान्भवेन्मन्त्री त्रिपुरायाः प्रसादतः ।
श्वेतपद्मैर्महेशानि महद्भिः पूजयेत्पराम् ॥ १०८ ॥
पूर्ववन्नाशयेत्पापं विंशज्जन्मभवं प्रिये ।
मासमात्रेण सकलं मोक्षस्तस्य करे स्थितः ॥ १०९ ॥
बन्धूककुसुमैर्देवि मासमात्रं प्रपूजयेत् ।
त्रैलोक्यं वशगं तस्य पूर्वपापं दहेद्बुधः ॥ ११० ॥
बिल्वपत्रैश्च जलजैः सहैव परिपूजयेत् ।
पूर्ववत्परमेशानि मासमात्रं प्रसन्नधीः ॥ १११ ॥
समृद्धिमान्भवेद्देवि सर्वपापहरः सदा ।
मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः ॥ ११२ ॥
श्वेतोत्पलैर्मिश्रितैस्तु पूजयेन्मासमात्रकम् ।
कुलाचारक्रमेणैव पातकं शतजन्मजम् ॥ ११३ ॥
ब्रह्महत्यादिजनितं नाशयेन्नात्र संशयः ।
मुक्तिस्तस्य करे देवि वाचा जीवसमो भवेत् ॥ ११४ ॥
अगस्त्यबाणबन्धूकजपारक्तोत्पलैः प्रिये ।
पूर्वक्रमेण संपूज्य मासमात्रं प्रसन्नधीः ॥ ११५ ॥
पातकं नाशयेन्मन्त्री साक्षात्कामसमो भवेत् ।
चम्पकैः पाटलैर्देवि बकुलैर्नागकेसरैः ॥ ११६ ॥
कह्लारैः सिन्दुरै रम्यैः पूर्ववत्पूजयेत्क्रमात् ।
सौभाग्यमतुलं तस्य मासमात्रेण जायते ॥ ११७ ॥
पापं विनाशयेद्देवि यदि जन्मसहस्रजम् ॥ ११८ ॥

श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्याप्रयोगविधिर्नाम सप्तदशः पटलः ॥ १७ ॥

---

अथाष्टादशः पटलः ।

---

र उवाच—

रत्नपूजाविधानं तु कथयामि तवानघे ।
*पुष्पाणि रचयेद्देवि माणिक्यरचितानि हि ॥ १ ॥

---

* इदमर्धं ख. पुस्तकस्थम् ।

---

१ ख. °पं हरेद्बु° ।

तैस्तु पूजा प्रकर्तव्या चक्रराजस्य पूर्ववत् ।
नानापुष्पैः सुगन्धैश्च कर्पूरक्षोदचन्दनैः ॥ २ ॥
एकविंशतिरात्रेण विंशतिं धरणीभुजाम् ।
दासीभूतां करोत्येव महारोगांश्च नाशयेत् ॥ ३ ॥
सूर्यवत्कान्तिमान्मन्त्री जायते नात्र संशयः ।
मुक्तारत्नैश्च रचयेत्स्वर्णपुष्पाणि सुन्दरि ॥ ४ ॥
तैस्तु पूजा प्रकर्तव्या नानापुष्पैश्च पूर्ववत् ।
एकविंशतिरात्रेण राजपत्न्यो वशाः प्रिये ॥ ५ ॥
कलाकान्तियुतो देवि जायते सुभगः क्षितौ ।
प्रवालघटितैः स्वर्णपुष्पैस्तु बहुभिर्यजेत् ॥ ६ ॥
पूर्ववत्परमेशानि कुलाचारक्रमेण तु ।
पुष्पैश्च विविधैर्देवि त्रिःसप्ताहात्सुरेश्वरि ॥ ७ ॥
क्रूरास्तस्य वशाः सर्वे वैरिवर्गान्विनाशयेत् ।
तथा मरकतक्षिप्तस्वर्णपुष्पैस्तु पूजयेत् ॥ ८ ॥
एकविंशतिरात्रेण नानापुष्पैः क्रमं यजेत् ।
विबुधास्तस्य वरदा वैरी नश्यति नान्यथा ॥ ९ ॥
पुष्परागमहारत्नघटितैः स्वर्णनिर्मितैः ।
कुसुमैः पूजयेच्चक्रं त्रिःसप्ताहात्सुरेश्वरि ॥ १० ॥
सुरास्तस्य वशा देवि बृहस्पतिसमो भवेत् ।
सुवर्णरचितैः पुष्पैर्वज्रकेयूरराजितैः ॥ ११ ॥
एकविंशतिरात्रेण मोहयेज्जगतीमिमाम् ।
देवदैत्या वशास्तस्य जायन्ते नात्र संशयः ॥ १२ ॥
इन्द्रनीलमयैः स्वर्णपुष्पैश्चक्रं समर्चयेत् ।
एकविंशतिरात्रेण तथा नीलैश्च नीरजैः ॥ १३ ॥
वैरिणो नाशमायान्ति शेषा वश्या भवन्ति हि ।
गोमेदघटितैः पुष्पैः सुवर्णस्य यजेद्बुधः ॥ १४ ॥
किंशुकैश्च कुसुम्भैश्च पूर्ववत्परमेश्वरि ।
सप्ताहाद्वैरिणो वश्या घातस्तेषु प्रजायते ॥ १५ ॥
त्रिःसप्ताहान्महापापसंचयं नाशयेत्प्रिये ।
क्रव्यादजीवा वश्या हि भवन्त्येव न संशयः ॥ १६ ॥

१ ख. °रचितैः ए° । २ ख. °केसररा° ।

नवरत्नमयैः स्वर्णपुष्पैर्यदि शिवां यजेत् ॥ १९ ॥
तदा देवा मनुष्याश्च[1] पन्नगा राक्षसादयः ।
सर्वे वश्या भवन्त्येव त्रिःसप्ताहान्न संशयः ॥ २० ॥
जन्मकोटिभवं पापं नाशयेन्नात्र संशयः ।
स्वर्णरत्नमयैः पुष्पैर्नवैरेव[2] प्रपूजयेत् ॥ २१ ॥
तदाऽश्वमेधदशकं कृतं भवति शैलजे ।
स्वर्णरत्नादिपूर्णत्वं यदा नास्ति तदा शृणु ॥ २२ ॥
तैरेव पुष्पैः पूजा तु कर्तव्या साधकोत्तमैः ।
यद्यत्पुष्पं यत्र यत्र दत्तं[3] तत्तत्सुरेश्वरि ॥ २३ ॥
तत्र तत्र प्रदातव्यं न दातव्यं यथेच्छया ।
अलंकारस्वरूपेण पूजयेच्चक्रनायकम् ॥ २४ ॥
केवलं स्वर्णपुष्पैस्तु त्रैलोक्यं स्तम्भयेच्छिवे[4] ।
मासमात्रेण पापानि सप्तजन्मभवान्यपि ॥ २५ ॥
नाशयेन्मोहयेत्सर्वां समुद्रवलयां धराम् ॥ २६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यास्वर्णरत्नपूजाविधिविवरणं नामाष्टादशः पटलः ॥ १८ ॥

---

अथैकोनविंशः पटलः ।

---

श्रीदेव्युवाच—

त्रिपुरा परमा शक्तिस्त्रैलोक्यवशकारिणी ।
एतस्याः परमानन्दसाधनं कथय प्रभो ॥ १ ॥
बीजत्रयस्य देवेश यद्यहं तव वल्लभा ।

ईश्वर उवाच—

एषा विद्या वरारोहे पारम्पर्यक्रमागता ॥ २ ॥

---

१ ख. °याश्च मुनयः प°। २ क. °नैरो यदि प्र°। ३ क. °तं दत्तं सुरे°। ४ ख. °च्छिव-मा°।

भवबन्धं घातयन्ती संस्मृता पापहारिणी ।
जपान्मृत्युंजयेशानि ध्याता सर्वार्थसाधिका ॥ ३ ॥
दुःखदौर्भाग्यदारिद्र्यभयघ्नी पूजिता भवेत् ।
विघ्नौघशमनी चैव हवनान्नात्र संशयः ॥ ४ ॥
पृथग्बीजत्रयस्याहं साधनं कथयामि ते ।
शुभ्राम्बरपरीधानो गन्धकर्पूरमण्डनः ॥ ५ ॥
मुक्ताफलस्फुरद्रूपभूषणः शुभ्रमाल्यधृत् ।
शुभमन्दिरसंविष्टो ब्रह्मचर्यसमन्वितः ॥ ६ ॥
पूजयेच्छुभ्रकुसुमैर्नैवेद्यमपि सूज्ज्वलम् ।
पायसं घृतसंपन्नं तथाऽमृतफलौदनम् ॥ ७ ॥
घृतमोदकसंपन्नं नानाशुभ्रान्नपूरितम् ।
नैवेद्यं दर्शयेद्देव्यै वागीश्वर्यै सुरेश्वरि ॥ ८ ॥
उपचारैः सुशुभ्रैश्च साधयेन्मोक्षवाङ्मयम् ।
वाग्भवाख्यां जपेद्विद्यां वागीशीं संस्मरन्बुधः ॥ ९ ॥
कर्पूरधवलां शुभ्रपुष्पाभरणभूषिताम् ।
अत्यन्तशुभ्रवसनां वज्रमौक्तिकभूषणाम् ॥ १० ॥
मुक्ताफलामलमणिजपमालालसत्कराम् ।
पुस्तकं वरदानं च दधतीमभयप्रदाम् ॥ ११ ॥
एवं ध्यायेन्महेशानि सर्वविद्याधिपो भवेत् ।
मूलादिब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् ॥ १२ ॥
तस्माज्ज्योतिर्मयीं ध्यायेज्जिह्वां दीपस्वरूपिणीम् ।
पाषाणेन समो वाऽपि मूर्खो जीवसमो भवेत् ॥ १३ ॥
अथ कामकलाशक्तिसाधकः परमेश्वरि ।
रक्तालंकारसुभगो रक्तगन्धानुलेपनः ॥ १४ ॥
रक्तवस्त्रावृतः सम्यग्ध्यायेत् कामकलात्मना ।
रक्तपुष्पैश्च विविधैः कुङ्कुमादिभिरर्चयेत् ॥
मूलादिब्रह्मपर्यन्तं स्फुरद्दीपस्वरूपिणीम् ।
बन्धूककुसुमाकारकान्तिभूषणभूषिताम् ॥ १६ ॥

---

१ ख. °मयेन्मन्त्रह° । २ ख. °रद्भूषाभू° । ३ क. °तगोलक° । ४ °रि । मनःसंकल्पशुभ्रो वा सा° । ५ क. °मेवं ध्या° । ६ क. °जिजन्हाग्रे दीर्घर° ।

...र्प इव देवेशि योषितां मानहारकः ।
मनश्चिन्तितयोषित्तु दासीव वशगा भवेत् ॥ १९ ॥
चलच्चलेन्दुसंकाशां तरुणारुणविग्रहाम् ।
चिन्तयेद्योषितां योनौ क्षोभयेत्सुरसुन्दरीः ॥ २० ॥
किं पुनर्मानुषीर्देवि त्रैलोक्यमपि मोहयेत् ।
एषैव चिन्तिता देवी सिन्दूराभा हृदि क्षणात् ॥ २१ ॥
आकर्षयेत्तदा शीघ्रं रम्भां वाऽपि तिलोत्तमाम् ।
रक्तवर्णां श्रियं ध्यात्वा तद्वीर्यसहसत्तमः (?)[1]॥ २२ ॥
तस्या मूर्ध्नि स्मरेद्बीजान्स्रवत्पीयूषवर्षिणीम् ।
ध्यायन्संमोहयेद्देवि मदनोत्तमानसाम् ॥ २३ ॥
क्षणमात्रेण देवेशि त्रैलोक्यं वशमानयेत् ।
एतत्कामकलाध्यानात्पञ्च कामा वरानने ॥ २४ ॥
मोहयन्ति जगत्सर्वं प्रयोगं शृणु पार्वति ।
पूर्वोक्तकामा देवेशि ज्ञातव्याः पञ्चसंज्ञकाः ॥ २५ ॥
विदर्भ्याद्येन कामेन मन्मथान्तर्गतं कुरु ।
कन्दर्पसंपुटं कृत्वा कोणगर्भगतं ततः ॥ २६ ॥
मकरध्वजसंज्ञं तु सर्वमेतद्वरानने ।
मीनकेतुगतं कुर्यान्मोहयेज्जगतीमिमाम् ॥ २७ ॥
त्रैलोक्यमोहनं नाम योगोऽयं परिकीर्तितः ।
शृणु देवि प्रवक्ष्यामि शक्तिबीजस्य साधनम् ॥ २८ ॥
सृष्टिसंहारपर्यन्तं शरीरे चिन्तयेत्पराम् ।
स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणीम्[2] ॥ २९ ॥
हेमप्रभाभासमानां विद्युन्निकरसुप्रभाम् ।
स्फुरच्चन्द्रकलापूर्णकलशं वरदाभयौ ॥ ३०
ज्ञानमुद्रां च दधतीं साक्षादमृतरूपिणीम् ।
ध्यायन्विषं हरेन्मन्त्री नानाकारव्यवस्थितम् ॥ ३१ ॥

---

१ ख. °यसहसा सतः । २ ख. °षधारि° ।

एतस्याः स्मरणाद्देवि नीलकण्ठत्वमागतः ।
अहं मृत्युंजयो भूत्वा विचरामि जले स्थले ॥ ३२ ॥
वैनतेयसमो मन्त्री विषमारसहस्रनुत् ।
भूतप्रेतपिशाचांश्च नाशयेद्रोगसंचयम् ॥ ३३ ॥
चातुर्थिकज्वरान्सर्वानपस्मारांश्च नाशयेत् ।
अथ त्रिकूटा संपूर्णा महात्रिपुरसुन्दरी ॥ ३४ ॥
चिन्तिता साधकस्याऽऽशु त्रैलोक्यवशकारिणी ।
क्रमेण नाभिहृद्वक्त्रमण्डलस्थाऽरुणप्रभा ॥ ३५ ॥
पद्मरागमणिस्वच्छा चिन्तनात्सुरवन्दिते ।
तस्याष्टगुणमैश्वर्यं सौभाग्यं च प्रजायते ॥ ३६ ॥
तन्नाम संस्मरन्मन्त्री योगिनीनां भवेत्प्रियः ।
मातृचक्रं तस्य काये तेन सार्धं सुखी भवेत् ॥ ३७ ॥
पुत्रवान्देवदेवेशि मन्त्री ध्यानान्न संशयः ।
यदा चक्रस्थिता पूर्णा खेचरी सिद्धिदायिनी ॥ ३८ ॥
चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत्समाराध्य संस्थिता वीरवन्दिते ॥ ३९ ॥
आदौ संबन्धिनि पदे मध्ये बीजाष्टकं बहिः ।
कलां ध्यात्वाऽङ्गनासङ्गे कामराज इवापरः ॥ ४० ॥
पाशाङ्कुशधनुर्बाणैर्मादनैर्मोहयेत्प्रिये ।
त्रैलोक्यसुन्दरीं देवीं किं पुनर्मर्त्ययोषितः ॥ ४१ ॥
तथैव शक्तिसंबन्धशस्त्रैस्तन्मयाविग्रहः[1] ।
सिद्धगन्धर्वदेवांश्च वशी कुर्यान्न संशयः ॥ ४२ ॥
एतामाराध्य देवेशि कामः सौभाग्यसुन्दरः ।
हरिश्च परमेशानि त्रिपुरासाधनात्प्रिये[2] ॥ ४३ ॥
त्रैलोक्यमोहनो भूत्वा स्थितिकर्ताऽभवत्सदा ।
एतत्समाराधनेन ब्रह्मा सृष्टिकरोऽभवत् ॥ ४४ ॥
चन्द्रसूर्यौ वरारोहे सृष्टिसंहारकारकौ ॥ ४५ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुराबीजत्रयसाधनविधिर्नामैकोनविंशः पटलः ॥ १९ ॥

---

१ ख. °क्रिमाऽस्त्राक्रैर्मन्त्रैस्त° । २ ख. °पुरां राधयेत्प्रि° ।

साधकानां हिताय त्वं वद शंकर सुव्रत ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि जपहोमविधिं प्रिये ।
चक्रं समर्चयेद्देवि सकलं नियतव्रतः ॥ २ ॥
बाह्यं मध्यगतं वाऽपि मध्यं वा चक्रमर्चयेत् ।
उपचारैः समाराध्य सहस्रं प्रजपेच्छुचिः ॥ ३ ॥
तदग्रे संस्थितो मन्त्री तदनन्तफलं भवेत् ।
ध्यात्वाऽथ वा चक्रराजमत्र पूजासमन्वितम् ॥ ४ ॥
जपारम्भं सुधीः कुर्यान्महापातकहा भवेत् ।
निगदेनोपांशुना वा मानसेनाथ वा जपेत् ॥ ५ ॥
निगदः परमेशानि स्पष्टवाचा निगद्यते ।
अव्यक्तस्तु स्फुरद्वक्त्र उपांशुः परिकीर्तितः ॥ ६ ॥
मानसस्तु वरारोहे चिन्तनाक्षररूपवान् ।
निगदेन तु यज्जप्तं लक्षमात्रं वरानने ॥ ७ ॥
उपांशुस्मरणेनैव तुल्यं भवति शैलजे ।
उपांशु लक्षमात्रं तु यज्जप्तं कमलेक्षणे ॥ ८ ॥
मानसोच्चारणात्तुल्यमेकेन परमेश्वरि ।
मुद्रासंनद्धदेहः सन्पूर्वोक्तध्यानयोगतः ॥ ९ ॥
लक्षमात्रं जपेद्यस्तु महापापैः प्रमुच्यते ।
लक्षद्वयेन पापानि सप्तजन्मभवान्यपि ॥ १० ॥
महापातकमुख्यानि नाशयेन्नात्र संशयः ।
ततो लक्षत्रयं जप्त्वा यस्तु मन्त्रं कुलेश्वरि ॥ ११ ॥
महापातककोटीस्तु नाशयेन्नात्र संशयः ।
चतुर्लक्षं जपेद्देवि स हि वागीश्वरो भवेत् ॥ १२ ॥

---

१ ख. ततो मन्त्रफ° । २ ख. °राजं मनः पू° । ३ ख. °नि सप्तज° । ४ क. ग. °यक्त्र-मध्वकु° । ५ क. °श्वरः । म° ।

कुबेर इव देवेशि पञ्चलक्षान्न संशयः ।
षड्लक्षजपमात्रेण महाविद्याधरो भवेत् ॥ १३ ॥
सप्तलक्षजपान्मन्त्री खेचरीमेलको भवेत् ।
अष्टलक्षजपान्मन्त्री देवपूज्यो भवेन्नरः ॥ १४ ॥
अणिमाद्यष्टसिद्धीनां नायको भवति प्रिये ।
वशगास्तस्य राजानो योषितस्तु विशेषतः ॥ १५ ॥
नवलक्षप्रमाणं तु जपेत्त्रिपुरसुन्दरीम् ।
रुद्रमूर्तिः स्वयं कर्ता हर्ता साक्षान्न संशयः ॥ १६ ॥
सर्ववन्द्यः सदा सर्वस्वेस्थः सौभाग्यभाग्भवेत् ।
यत्र वा कुत्रचिद्भागे लिङ्गं यत्पाश्चिमामुखम् ॥ १७ ॥
स्वयंभूबाणलिङ्गं वा वृषशून्यं जलस्थितम् ।
पश्चिमायतनं चापि इतरद्वाऽपि सुव्रते ॥ १८ ॥
शक्तिक्षेत्रेषु गङ्गायां नद्यां पर्वतमस्तके ।
पवित्रे सुस्थले देवि जपेद्विद्यां प्रसन्नधीः ॥ १९ ॥
तत्र स्थित्वा जपेल्लक्षं साक्षाद्देवीस्वरूपकः ।
ततो भवति विद्येयं त्रैलोक्यवशकारिणी ॥ २० ॥
एवं जपेद्यथाशक्ति होमकर्म समारभेत् ।
किंशुकैर्हवनं कुर्याद्दशांशेन वरानने ॥ २१ ॥
कुसुम्भकुसुमैर्देवि मधुत्रयविमिश्रितैः ।
विधिनोक्तप्रकारेण विघ्नौघं नाशयेत्क्षणात् ॥ २२ ॥
सर्वकामप्रदा राज्यभुक्तिमुक्तिफलप्रदा ।
कुण्डं विरच्य विधिवत्सर्वलक्षणलक्षितम् ॥ २३ ॥
योनिकुण्डं वाक्प्रदं स्यादाकृष्टिकरणं भगम् ।
लक्ष्मीप्रदं वर्तुलं स्याच्चन्द्रार्धं हि त्रयं भवेत् ॥ २४ ॥
नवत्रिकोणकुण्डं तु खेचरीसिद्धिदायकम् ।
चतुरस्रं शान्तिलक्ष्मीपुष्टिवृद्ध्यम्बुकारणम् ॥ २५ ॥
षडस्रं सर्वसंपत्तिधनसौभाग्यवर्धनम् ।
पद्माङ्कं सर्वसंपत्तिकारणं सुरवन्दिते ॥ २६ ॥

---

१ क. ग. °स्वच्छः सौ° । २ ख. °वृद्ध्यादिका° । ३ क. ग. °भ्र । भवेत्सर्वसमृद्धयै
द्वि°

...सहितं देवि शृणु लक्षणमुत्तमम् ।
पञ्चदशाङ्गुलं खातं रमणीयं यथा भवेत् ॥ २९ ॥
कण्ठदेशेऽङ्गुलं त्यक्त्वा नवाङ्गुलसमुन्नता ।
षडङ्गुलप्रविस्तारा मेखला प्रथमा भवेत् ॥ ३० ॥
द्वितीया मेखला देवि चतुरङ्गुलविस्तरा ।
सप्ताङ्गुलोच्चा कर्तव्या तृतीया मेखला ततः ॥ ३१ ॥
पञ्चाङ्गुलोच्चा देवेशि विस्तारे द्व्यङ्गुला भवेत् ।
* (वेदाग्निपक्षविस्तारा कर्तव्या मेखला प्रिये ॥ ३२ ॥
कर्तव्यमथ वा खातं द्वादशाङ्गुलसंमितम् ।
द्वादशाष्टतदर्धैस्तु मेखला देवि कारयेत् ॥ ३३ ॥)
चतुरङ्गुलमायामो तथा चैवोच्चता भवेत् ।
कुण्डस्य पश्चिमे भागे योनिं कुर्यात्सुलक्षणाम् ॥ ३४ ॥
द्वादशाङ्गुलदीर्घां तु तथाऽष्टाङ्गुलविस्तराम् ।
अश्वत्थपर्णरूपां तु त्रिकोणां वा विचक्षणः ॥ ३५ ॥
अथ चैकतमे पक्षे शृणु वक्ष्ये हि लक्षणम् ।
अष्टादशाङ्गुलं खातं कुण्डं कुर्याद्विचक्षणः ॥ ३६ ॥
चतुरङ्गुलविस्तारा षडङ्गुलसमुन्नता ।
मेखला पूर्ववत्कार्या योनिश्चापि तथा भवेत् ॥ ३७ ॥
चतुर्विंशाङ्गुलं कुण्डं त्रिकोणं परितः पृथक् ।
खातं तु पूर्ववत्कुर्यात्कण्ठे हित्वाऽङ्गुलं तथा ॥ ३८ ॥
पूर्ववन्मेखलाः कार्या एकाऽपि च तथा भवेत् ।
योनिस्तद्वन्महेशानि त्रिकोणं परिकीर्तितम् ॥ ३९ ॥
चतुरस्रेण कुण्डेन समं कुण्डं यथा भवेत् ।
तथा परिमितं कुर्यात्त्रिकोणादिकमद्रिजे ॥ ४० ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

---

१ ख. °ष्टकोणं व° । २ अथैकमेखला पक्षे । ३ क, ग, °त् । द्वात्रिंशदङ्गु° । ४ क. °न तत्कुण्डं ।

योनिकुण्डं योनिरूपं भगाङ्कं भगरूपकम् ।
कुर्यात्त्रिकोणवद्देवि चतुरस्रस्य संख्यया ॥ ४१ ॥
चतुर्हस्तमितं सूत्रं वर्तुलाकृति योजयेत् ।
वर्तुलं रचयेत्तेन खननं पूर्ववद्भवेत् ॥ ४२ ॥
मेखला पूर्ववद्योनिस्तथैव परिकीर्तिता ।
अर्धचन्द्रं तु कुण्डं हि परिवेषक्रमेण च ॥ ४३ ॥
चतुर्हस्तमितं कुर्यादर्धचन्द्रं यथा भवेत् ।
मेखला योनिसहिता पूर्ववत्परमेश्वरि ॥ ४४ ॥
नवत्रिकोणकुण्डं तु कथयामि वरानने ।
मध्यचक्रेण सदृशं कुण्डं कुर्याद्विचक्षणः ॥ ४५ ॥
मध्यत्रिकोणं देवेशि त्रिकोणमिव पूर्ववत् ।
मेखलारहितं तेन नवकोणं यथा भवेत् ॥ ४६ ॥
संधिभेदक्रमेणैव ततः कोणाष्टकं भवेत् ।
खनेत्तत्तत्प्रकारेण गणितेन यथाक्रमम् ॥ ४७ ॥
मेखलाः[1] पूर्ववत्कार्यास्त्यक्त्वा[2] कण्ठेऽङ्गुलं क्रमात् ।
योनिस्तथैव रचयेत्सर्वसौभाग्यवर्धनी ॥ ४८ ॥
अष्टपत्रं महेशानि कमलाकृति संभवेत् ।
चतुरस्रस्य मानेन यथा चाष्टदलं भवेत् ॥ ४९ ॥
एकत्र खननं चास्य कुर्यान्नेत्रसुखप्रदम्[3] ।
मेखला पूर्ववत्कार्या पद्माकृतिसुखावहा ॥ ५० ॥
योनिस्तथैव देवेशि कुर्यात्सर्वसमृद्धये ।
एवं विरच्य कुण्डं हि होमं कुर्याद्विचक्षणः ॥ ५१ ॥
दीपस्थानं समाश्रित्य कुण्डस्य रचना भवेत् ।
वर्तुलं रचयेद्देवि कूर्माकृति सुलोचने ॥ ५२ ॥
तन्मध्ये नव कोष्ठानि कृत्वा वर्णान्समालिखेत् ।
मध्यकोष्ठे क्षेत्रनाम ततोऽन्यत्र समालिखेत् ॥ ५३ ॥
स्वरयुग्मं क्रमेणैव दिक्षु चाष्टसु योजयेत् ।
अवर्गः कथितो देवि कवर्गादिकसप्तकम् ॥ ५४ ॥
पूर्वादिक्रमतो देवि कुबेरान्तं ततो लिखेत् ।
लक्षवर्णा शंभुकोणे विलिखेत्कूर्मसंज्ञके ॥ ५५ ॥

१ ख. खलाः । पू° । २ क. °खला पूर्ववत्कार्या त्यक्त्वा । ३ क. ग. °र्यान्नेत्रमु° ।

करस्थाने महाक्लेशः सर्वकार्यविनाशकृत् ॥ ५८ ॥
उदरे दुःखमधिकं पादयोर्हानिरुच्यते ।
पुच्छे तु धनहानिश्च जायते नान्यथा भवेत् ॥ ५९ ॥
दीपस्थानं मया प्रोक्तं त्रिषु लोकेषु दुर्लभम् ।
दीपस्थानं पुरे पश्येद्ग्रामे वा विषयेऽपि वा ॥ ६० ॥
यत्र कुत्रापि वा पश्येत्कार्यसिद्धिर्भवेत्प्रिये ।
क्षेत्राधिपस्य नाम्ना हि दीपस्थानं विचारयेत् ॥ ६१ ॥
दीपस्थाने जपं कुर्याद्धोमं च फलदं सदा ।
कुण्डं सुलक्षणं कुर्यादीशाने मण्डपस्य च ॥ ६२ ॥
अङ्गुष्ठपर्वमात्रोच्चं वालुकामण्डलं कुरु ।
गोमयेन च संलिप्तभूम्यां सुस्थलरूपकम् ॥ ६३ ॥
तत्र चोल्लेखनं कुर्यात्त्रिरेखाः पश्चिमाः क्रमात् ।
पूर्वाग्रे विलिखेत्पश्चात्तिस्रो रेखाः प्रदक्षिणाः ॥ ६४ ॥
उत्तरान्तास्ततो देवि लेखनीं तत्र संक्षिपेत् ।
प्रोक्षणं च ततः कृत्वा सिन्दूरेण ततः परम् ॥ ६५ ॥
कुङ्कुमेनाथ वा देवि कर्पूररजसाऽथ वा ।
चूर्णेन वा हरिद्राया धान्यपिष्टेन वा प्रिये ॥ ६६ ॥
त्रिकोणं चैव षट्कोणं वसुपत्रं समालिखेत् ।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ ६७ ॥
मध्ये पुष्पं विनिक्षिप्य त्रिपुरेश्या वरानने ।
ततः स्रुवादिपात्राणां पवित्रीकरणं यजेत् ॥ ६८ ॥
इध्मदूर्वाश्च दर्भाश्च द्विधा कृत्वा वरानने ।
आज्यस्थालीं चरुस्थालीं स्थापयेद्युग्मभेदतः ॥ ६९ ॥
स्रुवं स्रुचं ततः पश्चात्प्रणीतां प्रोक्षणीं क्रमात् ।
द्वंद्वशः परमेशानि स्थापयाधोमुखानि च ॥ ७० ॥

---

१ क. ग. °नं कृत्वा त्रिरे°। २ ख. °ण लिखोप्रिये । कु°। ३ ख. स्रुगादि°। ४ ख. स्रुगादि°।

अर्घ्यपात्रस्थमुदकं गृहीत्वा प्रोक्षणीं यजेत् ।
त्रिधा चोत्पवनं कृत्वा प्रोक्षयेत्तेन वारिणा ॥ ७१ ॥
तानि सर्वाणि पात्राणि पवित्रीकरणं भवेत् ।
उन्मुखानि ततः कृत्वा बालया चाभिमन्त्रयेत् ॥ ७२ ॥
परिस्तीर्य च दूर्वाभिः कुण्डस्य परितः प्रिये ।
पूर्वाग्रमुत्तराग्रं च परिस्तरणमुच्यते ॥ ७३ ॥
स्रुवं गृहीत्वा वामेन करेण[1] सुमुखं ततः ।
दर्भाङ्कुरेण तद्वक्त्रं पश्चिमात्पूर्वदेशतः ॥ ७४ ॥
त्रिवारं परिमृज्याथाधस्तत्करणमानयेत्[2] ।
उपरिष्टात्ततो देवि यावद्वक्त्रं तु मन्त्रयेत् ॥ ७५ ॥
बालयाऽथ वरारोहे पवित्राणि भवन्ति हि ।
मूलविद्यां समुच्चार्य कुण्डाय नम आलिखेत् ॥ ७६ ॥
अनेन मनुना देवि कुण्डं संपूजयेत्सुधीः ।
कामेश्वरीं कुण्डमध्ये सकामामृतुसंयुताम्[3] ॥ ७७ ॥
समावाह्य च संपूज्य तद्गर्भे वह्निना यजेत् ।
मूलविद्यानेत्रमन्त्रार्णद्वयेन[4] विलोकयेत् ॥ ७८ ॥
अस्त्रमन्त्रेण संरक्ष्य संपुटस्थं ततः परम् ।
भ्रामयेत्कुण्डपरितस्त्रिधा दक्षिणतः क्रमात् ॥ ७९ ॥
संपुटादग्निखण्डं तु हुंफडन्तेन संत्यजेत् ।
क्रव्यादंशं कोणभागे राक्षसे वीरवन्दिते ॥ ८० ॥
कवचेन च संपूज्य जानुभ्यामवनिं गतः ।
कुण्डमध्ये प्रतिष्ठाप्य कामबीजं च वह्निं च ॥ ८१ ॥
मूर्तये नम आलिख्य मनुना पूजयेच्छिवाम् ।
नाभिमण्डलदेशस्थवह्निनाडीपुटक्रमात् ॥ ८२ ॥
ज्ञानाग्निं बाह्यवह्निं च[5] एकीकृत्य प्रपूजयेत् ।
मूलविद्यां समुच्चार्य आंसोहमिति चोच्चरेत् ॥ ८३ ॥
वह्निचैतन्यमुच्चार्य ङेन्तं[6] हृन्मन्त्रसंयुतम् ।
अनेन मनुना गर्भे कामेश्वर्या विचिन्तयेत् ॥ ८४ ॥

---

१ ख. °ण च स्रुचं त° । २ ख. °ज्याथ अधस्तात्स्रुचमा° । ३ क. °मातुरसं° । ४ क. ग. °न्त्राक्षिद्व° । ५ क. °यं हसो° । ६ क. °यंङमेन्तं जेन्तं ।

तीर वैश्वानरप्रान्ते जातवेद इहाऽऽवह।
लोहिताक्ष ततः सर्वकर्माणीति च साधय ॥ ८७ ॥
वह्निजायान्वितो मन्त्रो वह्निं सम्यक्समर्चयेत्।
ध्यायेद्वह्निं हेमवर्णं शक्तिस्वस्तिकधारिणम् ॥ ८८ ॥
वरदाभयशोभाढ्यं सुवर्णवरभूषणम्।
एवमग्निं समभ्यर्च्य तन्मुखे कमलेक्षणे ॥ ८९ ॥
षट्कोणं चिन्तयेत्तत्र सप्त जिह्वाः समर्चयेत्।
वह्निवायुं वामकर्णं भूषितं नादबिन्दुना ॥ ९० ॥
अनेन योजयेद्देवि क्रमेण रसनाः प्रिये।
यकारादिसकारान्ता जिह्वाः सप्त भवन्ति हि ॥ ९१ ॥
पद्मरागतप्तहेमवर्णा हि सुरवन्दिते।
हिरण्याख्याः शंभुकोणे पूजयेत्सुरवन्दिते ॥ ९२ ॥
वैदूर्याभा सुवर्णा तु कनकाख्या ततः परम्।
पूर्वकोणे समभ्यर्च्य पूजयेत्तुद्रलोहिताम् ॥ ९३ ॥
उद्यदादित्यसंकाशां रक्ताख्यां वह्निकोणके।
नीलां नीलप्रभां देवि कृष्णाख्यां राक्षसे यजेत् ॥ ९४ ॥
श्वेतां मुक्ताप्रभां देवि शुभ्राख्यां पश्चिमे यजेत्।
धूमिनीं पद्मरागाभां वायौ रक्ततरां यजेत् ॥ ९५ ॥
करालीं चन्द्रकोट्याभां बहुरूपां तु मध्यगाम्।
दक्षिणोत्तरभागस्थां पूजयेत्सर्वसिद्धिदाम् ॥ ९६ ॥
क्रमेण जिह्वाबीजान्ते नामानि परिपूजयेत्।
[*अग्निर्हुतवाहनेऽथ हुताशनेऽथ वर्त्मने ॥ ९७ ॥
देवमुखः सप्तजिह्वो वैश्वानरो जातवेदाः।
क्रमेण पूजयेत्तत्र अष्टौ नामान्यनुक्रमात् ॥ ९८ ॥]

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः।

ख. °णैरत्नभू°। २ ख. °कर्णभू°। ३ ख. °न्दुमत्। अ°। ४ ख. °येत्तत्र लो°। ५ क.
°। ६ ख. °न्ते नमोन्तेन प्रपू°।

एवमग्निं तु संपूज्य कामेशीगर्भसंभवम् ।
दर्भकङ्कणमादाय करबन्धं सुलोचने ॥ ९९ ॥
मूलमन्त्रेण बाणेन चतुर्थेन च होमयेत् ।
गर्भाधानं विधायेत्थं सीमन्तोन्नयनादिकम् ॥ १०० ॥
कामेशीगर्भजातस्य वह्नेश्चौलादिसत्क्रियाः ।
मूलमन्त्रेण संचिन्त्य बाह्यचक्रं समर्चयेत् ॥ १०१ ॥
षट्कोणेषु षडङ्गानि वसुकोणेषु मातरः ।
लोकपालांश्च भूबिम्बे वह्निं प्रौढं विचिन्तयेत् ॥ १०२
ब्रह्माणं दक्षिणेऽभ्यर्च्य घृतस्थालीं प्रपूजयेत् । *
वह्निं संपूज्य विधिवत्तन्मुखे शैलसंभवे ॥ १०३ ॥
चक्रराजं समावाह्य सर्वरश्मिसमन्वितम् ।
सर्वसिंहासनैः सेव्यमुपचारैः समर्चयेत् ॥ १०४ ॥
धूपं विस्तारयेत्सम्यक्कुण्डमण्डपपूरितम् ।
दीपं च दर्शयेन्मन्त्री ततो दीपान्बहु प्रिये ॥ १०५ ॥
मालाकारेण संवेष्ट्य मेखलात्रयमद्रिजे ।
विस्तार्य चरुकं पश्चात्सर्वदिक्षु सुखाप्तये ॥ १०६ ॥
नित्यहोमं ततः प्रोक्तं कामनाहोममाचरेत् ।
मालतीजातिकामल्लीकुसुमैर्मधुमिश्रितैः ॥ १०७ ॥
घृतपूर्णैर्हुनेद्देवि वागीशत्वं प्रजायते ।
मूकस्यापि च मूढस्य शिलारूपस्य नान्यथा ॥ १०८
जपापुष्पैराज्ययुक्तैः करवीरैस्तथाविधैः ।
हवनान्मोहयेन्मन्त्री लोकत्रयनिवासिनः ॥ १०९ ॥
कर्पूरकुङ्कुमे देवि मिश्रं मृगमदेन हि ।
हवनान्मदनो देवि मन्त्रिणां विजितो भवेत् ॥ ११०
सौभाग्येन विलासेन सामर्थ्येनापि सुव्रते ।
चम्पकैः पाटलैर्हुत्वा श्रियं प्रोल्लसिताम्बराम् ॥ १११

---

* प्रपूजयेदित्यस्याग्रे 'तत्र वह्निं तु संपूज्य कामेशीगर्भसंभवम् । गर्भाधानादिका वह्ने
मूलेन कल्पयेत् ॥ १ ॥ इत्ययं श्लोकः ख. पुस्तके ।

---

१ ख. संचिन्त्य का° । २ ख. °ण देवेशि चतुर्थ्यन्ते च । ३ ख. °सुपत्रेषु । ४
कामेशीं तु विसर्जये° । ५ ख. च पूरये° । ६ ख. °पान्प्रदर्शयेत् ।

लाक्षाहोमाद्भवेद्राज्यं दारिद्र्यभयपीडितः ।
दुर्गोपसर्गशमनं पलत्रिमधुहोमतः ॥ ११४ ॥
[*दूरास्थितानां देवेशि गुरुणा प्रोक्तमार्गतः ।
होमं कुर्याद्वश्यकामैरन्यथा निष्फलं भवेत् ॥ ११५ ॥
रुधिराक्तेन च्छागस्य मांसेन निशि होमतः ।
मधुरत्रययुक्तेन गुरुणोक्तविधानतः ॥ ११६ ॥
परराष्ट्रं महादुर्गं समस्तं स्ववशं नयेत् ।
महापलेन देवेशि रिपोः सैन्यं विनाशयेत् ॥ ११७ ॥]
खेचरो जायते रात्रौ कृत्वा होमं चतुष्पथे ।
क्षीरं मधु दधि त्वाज्यं पृथग्घुत्वा वरानने ॥ ११८ ॥
आयुर्धनमथाऽऽरोग्यं समृद्धिर्जायते नृणाम् ।
क्रमेण शैलजे क्षीरमधुभ्यां मृत्युनाशनम् ॥ ११९ ॥
दधिमाक्षिकहोमेन सौभाग्यं धनमाप्नुयात् ।
सितया केवलं होमो वैरिस्तम्भनकारकः ॥ १२० ॥
होमो दधिमधुक्षीरलाजाभिर्वीरवन्दिते ।
रोगहन्ता कालहन्ता मृत्युहन्ता न संशयः ॥ १२१ ॥
कमलैररुणैर्होमः सम्यक्संपत्तिदायकः ।
रक्तोत्पलैर्जगद्वश्यं राजानो वशगाः क्षणात् ॥ १२२ ॥
नीलोत्पलैर्महादुष्टा वशमायान्ति नान्यथा ।
श्वेतोत्पलैः श्रियं वाचं लभते हवनात्प्रिये ॥ १२३ ॥
श्वेतैश्च ब्रह्मकमलैर्लक्ष्मीं सौभाग्यमाप्नुयात् ।
कह्लारहवनान्मन्त्री सौभाग्यं च धनं लभेत् ॥ १२४ ॥
पूर्णं दाडिमहोमेन वशी कुर्यान्महासुरान् ।
मातुलुङ्गफलोद्भूतहोमेन क्षत्रिया वशाः ॥ १२५ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

---

क. °मू । मधुमा° । २ ख. होमयेन्मधुरक्षी° । ३ ख. °यः । पुष्पैः कुसुम्भैररुणैः
क. ग. °र्णं बदरि । ५ ख. °न्महीश्वरा° ।

नारङ्गफलहोमेन वैश्या वश्या भवन्ति हि ।
कूष्माण्डफलहोमेन शूद्रा वश्यास्तथाऽपरे ॥ १२६ ॥
द्राक्षाफलैः सिद्ध्योऽष्टौ लक्षहोमान्न संशयः ।
कदलीफलहोमेन लक्षमात्रेण भूभृतः ॥ १२७ ॥
वैश्यास्तु दशसंख्याका भवन्त्येव न संशयः ।
खर्जूरीफलहोमेन लक्षमात्रेण भूभुजः ॥ १२८ ॥
वश्या विंशतिसंख्याका इत्याज्ञा पारमेश्वरी ।
नारिकेलफलैर्होमात्समृद्धिर्जायते प्रिये ॥ १२९ ॥
लक्षमात्रेण मन्त्रज्ञो राजाऽपर इव प्रिये ।
पक्वाम्रफलहोमेन लक्षमात्रेण सुन्दरि ॥ १३० ॥
चतुःसमुद्रपर्यन्तां मेदिनीं वशमानयेत् ।
पनसस्य फलैर्होमाल्लक्षेण शतभूभुजः ॥ १३१ ॥
वशा भवन्ति देवेशि नात्र कार्या विचारणा ।
तिलाज्यहोमाद्देवेशि कार्यसिद्धिर्भवेत्प्रिये ॥ १३२ ॥
राजिकालवणाभ्यां तु दुष्टलोकान्वशं नयेत् ।
गुग्गुलस्य च होमेन सर्वदुःखानि नाशयेत् ॥ १३३ ॥
कुङ्कुमेन हुनेद्देवि त्रैलोक्यं वशमानयेत् ।
वैरिणो वशगाः शीघ्रं चन्दनस्यापि होमतः ॥ १३४
रक्तचन्दनहोमेन वश्या हि पुरुषाः स्त्रियः ।
कर्पूरस्य च होमेन वाग्वश्यं जायते नृणाम् ॥ १३५ ॥
कस्तूरीहोमतो देवि राजानो राजमन्त्रिणः ।
वश्या भवन्ति सकलाः परिवारयुताः प्रिये ॥ १३६ ॥
तिलतण्डुलहोमेन शान्तिर्भवति मन्दिरे ।
शर्करागुडहोमेन सर्वकामार्थसाधकः ॥ १३७ ॥
घृतपायसहोमेन सिता युक्तेन मान्त्रिकः ।
त्रैलोक्यं वशमायाति धान्यसिद्धिमवाप्नुयात् ॥ १३८
नानाविधान्नहोमेन धान्यसिद्धिर्भवेद्ध्रुवम् ।
सोपस्करैश्च वटकैरुपसर्गान्विनाशयेत् ॥ १३९ ॥
बन्धूककुसुमैर्होमैः सर्वशत्रून्विनाशयेत् ।
जपापुष्पैर्जगद्वश्यं वनपुष्पैश्च मोहनम् ॥ १४० ॥

---

१ ख. वशास्तु । २ क. °वात्पक° । ३ ख. कार्यार्थ° । ४ ख. °र्वसत्वान्वशं नये° । °श्यं वापम्° ।

इक्षुखण्डैः सुखावाप्तिस्तद्वसाद्राजकन्यकाः ।
वश्या भवन्ति देवेशि नारिकेलजलेन वा ॥ १४३ ॥
केवलं घृतहोमेन वरदाः सर्वशक्तयः ॥ १४४ ॥
शृणु देवि प्रवक्ष्यामि मानं हवनसिद्धिदम् ।
पुष्पं समग्रं जुहुयात्कमलं वाऽपि पुष्कलम् ।
कुसुम्भवनपुष्पाणि यथेष्टानि हुनेत्प्रिये ॥ १४५ ॥
शतसंख्यास्तिला देवि राजिकाः शतसंख्यया ।
लाजा मुष्टिप्रमाणास्तु घृतं गद्याणमात्रकम् ॥ १४६ ॥
चुलुकार्धं पयः क्षीरमन्नं ग्रासमितं भवेत् ।
स्थूलं फलं महेशानि कूष्माण्डं मातुलुङ्गकम् ॥ १४७ ॥
मनःप्रियैश्च खण्डैश्च फलं भवति निश्चयात् ।
रम्भाफलं चतुःखण्डैर्लघु चेत्खण्ड्यते न हि ॥ १४८ ॥
नारिकेलस्य खण्डं हि रम्भायाः फलवत्प्रिये ।
पर्वस्थाने चेक्षुखण्डं मनःसंतोषकारि वा ॥ १४९ ॥
द्राक्षाफलं समग्रं स्यान्नारङ्गं खार्जुरं तथा ।
गुग्गुलं क्रमुकार्धं तु कुङ्कुमं च तथा भवेत् ॥ १५० ॥
गुञ्जासमं च कर्पूरं कस्तूरी घुसृणं तथा ।
चन्दनं चागरुं देवि क्रमुकेण समं भवेत् ॥ १५१ ॥
मनःप्रियाणि सर्वाणि फलानि हवने प्रिये ।
लाक्षा गुग्गुलसंख्या स्याद्यद्वस्तु मनोहरम् ॥ १५२ ॥
मनःप्रियाहुतीः कृत्वा होमं कुर्यात्सुलोचने ।
एतदाहुतिमानं ते कथितं सर्वविघ्नहृत् ॥ १५३ ॥
यथेच्छया वरारोहे श्रीविद्यां परितोषयेत् ।
यथाशक्ति जपं कृत्वा तद्दशांशेन होमयेत् ॥ १५४ ॥

---

१ ख. लभेत् । २ ख. °सिद्धये । पु° । ३ ख. °लं चापि । ४ ख. °म्भ बाणपु° । ५ ख. यथोक्तानि । ६ ख. °र्धं भवेत्क्षीरं । ७ ख. च द्विः खण्डं लघु । ८ ख. हि स्थूलं कुर्यान्मनः प्रियम् । प° । ९ क. °ये । द्राक्षा ।

किंशुकैः पापसंघातनाशकैरथ वा प्रिये ।
नानाद्रव्यैः पृथग्भूतैर्मिश्रितैर्वा वरानने ॥ १५५ ॥
यथाशक्त्या तु मिलितैर्होमं कुर्याद्विचक्षणः* ।
शृणु देवि प्रवक्ष्यामि विशेषविधिमुत्तमम् ॥ १५६ ॥
आदौ कुण्डं समुत्पाद्य सर्वलक्षणसंयुतम् ।
चतुरस्रं तु शोभाढ्यं शतहोमेऽर्धहस्तकम् ॥ १५७ ॥
सहस्रे हस्तमात्रं च चतुरस्रं द्विहस्तकम् ।
द्विहस्तमयुते प्रोक्तं लक्षे हस्तचतुष्टयम् ॥ १५८ ॥
कोटिहोमेऽष्टहस्तं च कृत्वा कुण्डस्य लक्षणम् ।
शान्तिके चतुरस्रं तु वश्ये चैवार्धचन्द्रकम् ॥ १५९ ॥
षट्कोणं स्तम्भने चैव मारणे तद्वदेव हि ।
आकर्षणे त्रिकोणं च वृत्तमुच्चाटने तथा ॥ १६० ॥
नानासिद्धिहितार्थाय पञ्चकोणं च सिद्धिदम् ।
उत्तरे शान्तिकं चैव स्तम्भने वारुणीं दिशम् ॥ १६१ ॥
मारणं दक्षिणे चैव पश्चिमे वश्यकर्माणि ।
दाहकर्म च आग्नेये विद्वेषो नैर्ऋते तथा ॥ १६२ ॥
उच्चाटने तु वायव्य ईशान्ये(ऐशाने) सर्वसिद्धिदम् ।
कृत्तिका कर्षणे प्रोक्ता भरणी मारणे तथा ॥ १६३ ॥
स्वाती वश्ये तथोच्चाटे ज्येष्ठा स्तम्भनमेव च ।
विद्वेषणे शततारं चाभिजित्वं तु शान्तिके ॥ १६४ ॥
सोमे सर्वाकर्षणं च मारणं मङ्गले तथा ।
बुधेन त्वधनं कार्यं गुरुवारे तु पौष्टिकम् ॥ १६५ ॥
शुक्रे च सर्वकामस्तु भानोरथ(नावथ) शुभानि च ।
पूर्वाह्णे वश्यकर्माणि मध्याह्ने प्रीतिनाशनम् ॥ १६६ ॥
उच्चाटनं चापराह्णे संध्यायां मारणे तथा ।
शान्तिके अर्धरात्रं च पौष्टिकं प्रातरेव हि ॥ १६७ ॥
स्तम्भने गजचर्माणि मारणे माहिषं तथा ।
मृगचर्म तथोच्चाटे छागलं वश्यकर्माणि ॥ १६८ ॥
विद्वेषे जम्बुकं प्रोक्तं गोचर्म शान्तिके तथा ।
नानासिद्धिहितार्थाय व्याघ्रचर्ममुदाहृतम् ॥ १६९ ॥

* इत ऊर्ध्वं 'सर्वविघ्नसमूहं तु' इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति ।

माहिषाघृतसंयुक्तं सदा च सिद्धिदायकम् ।
मारणेऽप्यचिराहोमं समिधै(द्भि)र्दाडिमोद्भवैः ॥ १७२ ॥
अजाघृतेन देवेशि वशयेत्सचराचरम् ।
विद्वेषस्यैव होतव्य(व्या) उन्मत्तसमिधस्तथा ॥ १७३ ॥
अतसीतैलसंयुक्ता विद्वेषणमतः परम् ।
सर्वविघ्नसमूहं तु नाशयेन्नात्र संशयः ॥ १७४ ॥
पूर्णाहुतिं ततो देवि पूजयित्वा तु कन्यकाः ।
पूजितं तेन त्रैलोक्यं कन्यका येन पूजिताः ॥ १७५ ॥
बालया पूजयद्देवि श्रीविद्यां पूजयेत्ततः ।
पञ्चसिंहासनैर्देवि श्रीविद्यां तत्र पूजयेत् ॥ १७६ ॥
सुवासिनीस्ततः पूज्याः श्रीविद्यां तत्र पूजयेत् ।
विप्रान्संतोषयेत्पश्चाच्छ्रीविद्यां तत्र पूजयेत् ॥ १७७ ॥
योगिन्यश्च तथा पूज्याः श्रीविद्यां परितोषयेत् ।
दर्शनानि समग्राणि पूजयेद्विविधानि च ॥ १७८ ॥
श्रीविद्यां तोषयेत्तत्र पूर्णाहुतिमथाऽऽचरेत् ॥ १७९ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुराजपहोमविधानविवरणं नाम
विंशः पटलः ॥ २० ॥

---

## अथैकविंशः पटलः ।

---

ईश्वर उवाच—

होमान्तरं प्रवक्ष्यामि येन ब्रह्म सनातनम् ।
ज्ञानेन चतुरस्राख्यं कुण्डं संचिन्त्य पूर्ववत् ॥ १ ॥
आत्माभिश्चतुरस्रं तद्विज्ञेयं वीरवन्दिते ।
आत्मानो वेदसंख्या हि ज्ञातव्या देशिकोत्तमैः ॥ २ ॥

---

१ ख. °त् । योगिन्यश्च ततः । २ ख. °द्यां परितोषये° ।

येषां विज्ञानमात्रेण पुनर्जन्म न विद्यते ।
साधारणेन पक्षेण वर्तते सर्वजन्तुषु ॥ ३ ॥
स आत्मा परमेशानि प्राणरूपी वरानने ।
प्राणस्तु पवनो देवि हृदयस्थानमन्दिरः ॥ ४ ॥
शरीरं व्याप्य सकलं चरस्याप्यचरस्य च ।
हंसस्वरूपी विज्ञेयः श्वासोच्छ्वासविलासवान् ॥ ५ ॥
जीव इत्येव नामास्य भ्रान्त्या श्वासान्न वस्तुतः ।
श्वासोच्छ्वासौ देहभावाद्भ्रान्तिरेव न संशयः ॥ ६ ॥
कुलालचक्रभेदेन घटाकाशं यथा घटे ।
दृश्यते परमेशानि आकाशं व्याप्य तिष्ठति ॥ ७ ॥
घटे भवति भिन्नत्वं नाऽऽकाशे भिन्नता भवेत् ।
तथा देहगतो जीवो देहनाशे वरानने ॥ ८ ॥
व्याप्य तिष्ठति सर्वत्र तस्माद्[2]आत्मा परं महत् ।
आत्मज्ञानं मया प्रोक्तं द्वितीयस्य शृणु प्रिये ॥ ९ ॥
अन्तरात्मेति किं नाम तच्छृणुष्व पदं महत् ।
अन्तःशब्देन देवेशि रहस्यं सूक्ष्मरूपकम् ॥ १० ॥
परमाणुस्वरूपेण सर्वं व्याप्य विजृम्भते ।
अन्तरङ्गतया तेन चरं वाऽप्यथ वाऽचरम् ॥ ११ ॥
व्याप्यते सकलं तस्मादन्तरात्मेति गीयते ।
स एव हंस आत्मा हि योगिग[3]म्यो [4]यदा भवेत् ॥ १२ ॥
तारचञ्चुर्वरारोहे निगमागमपक्षवान् ।
शिवशक्तिपदद्वंद्वो बिन्दुत्रयविलोचनः ॥ १३ ॥
अयं परमहंसस्तु [5]सृष्टिं व्याप्यावतिष्ठति ।
तदा भूतानि जायन्ते क्रमेण कमलेक्षणे ॥ १४ ॥
आकाशं पवनोऽग्निश्च जलं पृथ्वी वरानने ।
पञ्चकस्यास्य देवेशि प्रथमं [6]चित्तमुच्यते ॥ १५ ॥
अविद्याख्यसरोमध्ये मोहपङ्कप्रपूरिते ।
प्रपञ्चकमले भूतपञ्चाक्षपरिजृम्भिते ॥ १६ ॥

---

१ ख. श्वासस्वलक्षितः । २ ख. °दाप्यपदं म° । ३ क. योगग° । ४ क. यथा । ५ ख. °स्तु अथा सर्वत्र ति° । ६ क. चित्त उ° ।

परमात्मेति जानीहि त्रयमेतदुदाहृतम् ।
*पक्षपुच्छशिरो देवि आकारप्रतिभासकः ॥ १९ ॥
ज्ञानात्मा कथ्यते भद्रे यः साक्षात्साक्षिरूपकः ।
येनेदं ज्ञायते सर्वं समत्वेन वरानने ॥ २० ॥
चन्द्रबिम्बं यथा देवि जलक्षीरेषु दृश्यते ।
न लिप्तस्त(तं त)स्य देवेशि नीरक्षीरविभेदतः ॥ २१ ॥
कर्दमे चन्दने बिम्बं न भवेल्लिप्तमद्रिजे ।
सर्वसाक्षी तथा भद्रे ज्ञानात्मा परिकीर्तितः ॥ २२ ॥
आत्मान्तरात्मपरमज्ञानात्मानः प्रकीर्तिताः ।
एतद्रूपं हि चित्कुण्डं चतुरस्रं वरानने ॥ २३ ॥
आनन्दमेखलारम्यं बिन्दुत्रिवलयाङ्कितम् ।
अर्धमात्रा योनिरूपं ब्रह्मानन्दमयं सदा ॥ २४ ॥
पराहंतामये सर्वज्ञानदीपविजृम्भिते ।
संविदग्नौ हुनेद्देवि प्रपञ्चहविरुत्कटम् ॥ २५ ॥
शब्दाख्यं मातृकारूपमक्षवर्णविराजितम् ।
अक्षराणि हुतान्यत्र निःशब्दं ब्रह्म जायते ॥ २६ ॥
पुण्यपापे हविर्देवि कृत्याकृत्ये हविः प्रिये ।
संकल्पश्च विकल्पश्च धर्माधर्मौ हविस्तथा ॥ २७ ॥
जुहुयात्परमेशानि मन्त्राभ्यां विमलानने ।
मूलविद्यां ब्रह्मरूपां ध्यात्वा तु तदनन्तरम् ॥ २८ ॥
तदन्ते चोच्चरेत्पश्चाद्ब्रह्मप्राप्त्यै तु देशिकः ।
धर्माधर्महविर्दीप्त आत्माग्नौ मनसा स्रुचा ॥ २९ ॥
सुषुम्नावर्त्मना नित्यमक्षवृत्तिं जुहोम्यहम् ।
स्वाहान्तेन हुनेद्देवि सकलं निष्कलं जगत् ॥ ३० ॥

* इदमर्धं ख. पुस्तके नास्ति ।

ख. न लिप्तस्त° । २ ख. °जिते । अ° । ३ ख. हुनेदत्र । ४ ख. °वृत्तिर्जुहो° ।

अन्तर्होममनुर्देवि सर्वमायानिकृन्तनः ।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ॥ ३१ ॥
धर्माधर्मौ कलास्नेहपूर्णवह्नौ जुहोम्यहम् ।
अग्निजायान्वितो मन्त्रो विद्यान्ते कथितस्तव ॥ ३२ ॥
निष्प्रपञ्चो यदा देवि जायते मन्त्रवित्तमः ।
तदा सच्चिन्मयः साक्षात्केवलं ब्रह्म साधकः ॥ ३३ ॥
+ दृशसोऽहं जुहंसोऽपि पीत्वा मृत्युं सुखी भवेत्(?) ॥३४॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे ज्ञानहोमविधिर्नामैकविंशः पटलः ॥ २१ ॥

---

अथ द्वाविंशः पटलः ।

---

ईश्वर उवाच—

होमादिकं तु सकलं कुमारीपूजनं विना ।
परिपूर्णफलं नैव पूजनात्सफलं भवेत् ॥ १ ॥
कुमारीपूजनाद्देवि पूजाकोटिफलं भवेत् ।
पुष्पं कुमार्यै यद्दत्तं तन्मेरुसदृशं भवेत् ॥ २ ॥
कुमारी भोजिता येन त्रैलोक्यं तेन भोजितम् ।
कुमार्यै यज्जलं दत्तं तज्जलं सागरोपमम् ॥ ३ ॥
अन्नं तु मीननयने कुलाचलसमं भवेत् ।
एकाब्दात्षोडशाब्दान्ताः कन्यकाः पूजयेच्छुभाः ॥ ४ ॥
विवाहरहिताः स्युश्चेदुत्तरोत्तरसिद्धिदाः ।
विवाहितास्तु देवेशि बाला एव कुमारिकाः ॥ ५ ॥
सुवासिन्यो मदप्रौढाः संशयं त्यज सुव्रते ।
कुमारीपूजनं देवि कुमारीमनुना भवेत् ॥ ६ ॥
मन्त्रभेदेन तेनैव श्रीविद्यां च प्रपूजयेत् ।
नैमित्तिकं प्रवक्ष्यामि येन ब्रह्ममयो बुधः ॥ ७ ॥
निर्विकल्पस्य देवेशि नान्यस्य सुरवन्दिते ।
सर्वशङ्काविनिर्मुक्तः सर्वज्ञः साधकोत्तमः ॥ ८ ॥

---

+ इदमर्धं ख. पुस्तके नास्ति ।

---

१ ख. °लम्ब्याऽऽत्मनि स्रुवा । ध° । २ ख. °वाहं जु° । ३ ख. °री पूजि° । ४ °न पूजि° । ५ ख. °अने कुमा° । ६ ख. 'कन्या' इति । ७ ख. °व । तत्र मे° ।

तृतीयागाविधिं कुर्यात्खेचरो जायते प्रिये ।
अर्घ्यपात्रे वह्निसूर्यसोमामृतमये शिवे ॥ ९ ॥
सोमामृतं तु जानीहि नानाद्रव्यमयं सदा ।
सविकल्पस्य देवेशि वर्णानुक्रमभेदतः ॥ १० ॥
कथ्यन्ते द्रव्यभेदास्तु क्रमेण वरवर्णिनि ।
क्षीराज्यमधुमैरेयद्रव्यभेदा भवन्ति हि ॥ ११ ॥
सर्वज्ञत्वे वरारोहे यज्ञे दोषो न विद्यते ।
अश्वमेधादियज्ञेषु वाजिहत्या कथं भवेत् ॥ १२ ॥
द्रव्यभेदा वरारोहे बहवः सन्ति भेदतः ।
जलं क्षीरं घृतं भद्रे मधु मैरेयमैक्षवम् ॥ १३ ॥
पौष्यं तरुमयं धान्यसंभवं बहुनिर्मितम् ।
सहकारभवं देवि विविधं बहुभेदतः ॥ १४ ॥
मादकं धर्मसंछेदाद्वर्ज्यमासीत्सुलोचने ।
ज्ञानेन संस्कृतं तत्तु महापातकनाशनम् ॥ १५ ॥
ब्रह्महत्यासुरापानस्वर्णस्तेयादिपातकान् ।
नाशयेत्पूजनाद्देवि निर्विकल्पः स मन्त्रवित् ॥ १६ ॥
विचारयेत्सदा सर्वं सर्वविद्वीरवन्दिते ।
जलं जलचरं विद्धि घटं पूर्णं समानयेत् ॥ १७ ॥
स्थापितं देवि सप्ताहाज्जलं जीवसमन्वितम् ।
क्षीरं वै यस्य जीवस्य तस्यै मांसं न संशयः ॥ १८ ॥
कृशा पुत्रवती नारी वन्ध्या पुष्टा यतः प्रिये ।
माकन्दफलजं रम्यं द्रावं सेव्यं द्विजातिभिः ॥ १९ ॥
अमादकत्वाद्देवेशि चैक्षवं सेव्यते बुधैः ।
अनामिषं नास्ति किंचित्सर्वं क्षीरादिकं प्रिये ॥ २० ॥
वेदशास्त्रपुराणेषु गूढो ज्ञानसमुच्चयः ।
शमीवृक्षे यथा वह्निस्तथा तिष्ठति सुन्दरि ॥ २१ ॥
सर्वभूतेषु विज्ञानं ज्ञातव्यं देशिकोत्तमैः ।
काष्ठनिर्मथनाद्देवि प्रकटो वह्निरुच्यते ॥ २२ ॥

---

१ ख. °द्भवं धा° । २ ख. °भं वर्ण भे° । ३ ख. °स्य मांसं । ४ ख. ततः । ५ ख.
ं सकलं द्रव्यमसंसे° ।

तत्काष्ठं दह्यते तेन[1] तथा ब्रह्ममयं जगत् ।
पापपुण्यविनिर्मुक्तं ज्ञानमेतद्वरानने ॥ २३ ॥
किंचिदुल्लासपर्यन्तं ग्राह्यमेतत्सुरेश्वरि ।
यज्ञाङ्गं तु यतो[2] लौल्यात्पातकी ब्रह्महा भवेत् ॥ २४ ॥
मादकं वस्तु सकलं वर्जयेत्कनकादिकम् ।
कलञ्जं पातकी तस्माद्ब्रह्म[3] ब्रह्मविदां वरः ॥ २५ ॥
धर्माधर्मपरिज्ञानात्सकलेऽपि पवित्रता ।
विण्मूत्रं स्त्रीरजो वाऽपि नखास्थि सकलं प्रिये ॥ २६ ॥
विचारयेन्मन्त्रवित्तु पवित्राण्येव सुव्रते ।
अन्नं ब्रह्म विजानीयात्तेन यस्य समुद्भवः ॥ २७ ॥
नानाजीवाश्रयं[4] तत्तु पुरीषं केन निन्द्यते ।
नानाविधा हि देवेशि देवताः सलिलस्थिताः ॥ २८ ॥
तेनोदकेन यज्जातं मूत्रं कस्मात्तु दूषयेत् ।
गोमूत्रप्राशनं देवि गोमयस्यापि भक्षणम् ॥ २९ ॥
प्रायश्चित्ते तु कथितं ब्रह्महत्यादिके प्रिये ।
मले मूत्रे कथं दोषो भ्रान्तिरेव न संशयः ॥ ३० ॥
स्त्रीरजः परमेशानि देहस्तेनैव जायते ।
कथं[5] तु दूषणं[6] येन प्राप्यते परमं पदम् ॥ ३१ ॥
पुरुषस्य तु यद्वीर्यं बिन्दुरित्यभिधीयते ।
बिन्दुस्तु परमेशानि कायोऽयं शिवरूपकः ॥ ३२ ॥
शिवतत्त्वेन चास्थ्यादिदूषणं नास्ति बैन्दवे ।
रेतः पवित्रं देहस्य कारणं केन निन्द्यते ॥ ३३ ॥
ज्ञानमार्गोऽयं[7] सकलो निर्विकल्पस्य सुन्दरि[8] ।
सविकल्पो[9] महेशानि पापभाग्जायते नरः ॥ ३४ ॥
मातुर्गर्भाद्विनिर्गत्य शिशुरेव न संशयः ।
इन्द्रियाण्यखिलान्यस्य देहस्थान्यपि वल्लभे ॥ ३५ ॥
निर्विकारतया तत्र नान्यथा भवति प्रिये ।
भगलिङ्गसमायोगो[10] जन्मकाले भवेत्सदा ॥ ३६ ॥

---

१ ख. यथा । तेनेति पाठान्तरम् । २ ख. तु ततो । ३ ख. °स्माद्धर्मो ब्र° । ४ क. °न यतत्तुर्देवि पु° । ५ ख. °थं ते दू° । ६ ख. पं चैव प्रा° । ७ °मार्गेण सकलं नि° । ८ ख. °न्दर वि° । ९ ख. °कल्पश्चेन्महे° । १० ख. °योगाज्जन्मकाये समुद्भवेत् । का° ।

चन्द्ररूपं चरुं कृत्वा तन्मध्ये मस्तके शिवे ।
दीपमेकं विनिक्षिप्य वसुपत्रेऽष्ट दीपकान् ॥ ७ ॥
यवगोधूममुद्गादिरचिताञ्शर्करायुतान् ॥
चषकान्वितमुद्राभिः शोभितान्घृतपूरितान् ॥ ८ ॥
अभिमन्त्र्य महेशानि रत्नेश्वर्या ततः परम् ।
श्रीबीजं च धराबीजं संलिख्य वरवर्णिनि ॥ ९ ॥
गसौ च मपनाः पश्चादिन्द्रस्थाः क्रमतः प्रिये ।
वामकर्णसमायुक्ता बिन्दुनादविभूषिताः ॥ १० ॥
बीजपञ्चकमेतत्तु पञ्च रत्नानि सुन्दरि ।
पूर्वबीजे विलोमेन रत्नेशीयं नवाक्षरी ॥ ११ ॥
मूलमन्त्रेण चाभ्यर्च्य ततश्चाऽऽरात्रिकं चरेत् ।
स्थालकं तु समुद्धृत्य मस्तकान्तं पुनःपुनः ॥ १२ ॥
नववारं महेशानि ततो नीराजनं चरेत् ।
समस्तचक्रचक्रेशीयुते देवि नवात्मिके ॥ १३ ॥
आरात्रिकमिदं देवि गृहाण मम सिद्धये ।
नीराजनमनुर्देवि विद्यान्ते प्रकटीकृतः ॥ १४ ॥
आरात्रिके महेशानि चक्रमुद्रा व्यवस्थिता ॥
वामहस्ताङ्गुष्ठगर्भे कनिष्ठां दक्षिणां नयेत् ॥ १५ ॥
कनिष्ठागर्भगे वामे दक्षाङ्गुष्ठं विनिक्षिपेत् ।
अन्योन्यकरयोर्देवि चक्रमुद्रेयमीरिता ॥ १६ ॥
आरात्रिकविधिं कृत्वा नैवेद्यं तु निवेदयेत् ।
शुद्धस्फटिकसंकाशश्चन्द्ररश्मिसमप्रभः ॥ १७ ॥
लसत्तण्डुलजो देवि चारुमुद्गौदनः प्रिये ।
हिङ्गुजीरमरीचाद्यैरार्द्रकै रुचिरः प्रिये ॥ १८ ॥
वटकः कुङ्कुमाकारः पायसं हेमसंनिभम् ।
दुग्धगम्भीरसुभगं शर्करापूरपूरितम् ॥ १९ ॥
कपिलाघृतसंयुक्ता भूर्जत्वङ्खण्डकाः प्रिये ।
शर्करालोलिता देवि सूपं मुद्गोद्भवं तथा ॥ २० ॥
नानाविधानि पेयानि व्यञ्जनानि बहूनि च ।
इत्याद्यन्नरसोपेतं नैवेद्यं कल्पयेद्बुधः ॥ २१ ॥

१ ख. °न्ययोगतो दे° । २ क. °कै रचितः प्रि° ।

मनःकल्पितरूपं वा त्रिपुरायै निवेदयेत् ।
हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् ॥ २२ ॥
पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि ।
विद्यान्ते परमेशानि नैवेद्यमनुरीरितः ॥ २३ ॥
परिषिच्य ततो देवि नित्यहोमं समाचरेत् ।
मूलमन्त्रेण देवेशि हुनेत्पञ्चाऽऽहुतीः क्रमात् ॥ २४ ॥
प्राणापानौ तथा व्यान उदानश्च समानकः ।
एतत्स्वरूपं जानीयादाहुतीनां च पञ्चकम् ॥ २५ ॥
षडाहुतीः षडङ्गेन नित्यहोमोऽयमीरितः ।
नित्यहोमविधिं कृत्वा बलिदानविधिं चरेत् ॥ २६ ॥
ईशाने च तथाऽऽग्नेये नैर्ऋत्ये च तथा प्रिये ।
वायव्ये क्रमतो देवि मण्डलानां चतुष्टयम् ॥ २७ ॥
श्रीचक्रमभितो देवि त्रिकोणं व्योम चाऽऽलिखेत् ।
पूर्वमन्त्रैः समभ्यर्च्य बटुकादिभिरद्रिजे ॥ २८ ॥
एह्येहि देवि पुत्रान्ते बटुकान्तेऽथ नाथ च ।
कपिलान्ते जटाभार भासुरान्ते त्रिनेत्र च ॥ २९ ॥
ज्वालामुख च सर्वान्ते विघ्नान्नाशय नाशय ।
सर्वोपचारसहितं बलिं गृह्ण द्विधापदम् ॥ ३० ॥
वह्निजायान्वितो मन्त्रो बटुकस्य उदाहृतः ।
अनेन विधिना देवि बटुकस्य बलिं प्रिये ॥ ३१ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा
पाताले वाऽनले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ॥
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ॥३२॥

एतदन्ते महेशानि यांबीजं योगिनी ततः ।
भ्यः स्वाहा सर्ववर्णान्ते योगिनीपदमालिखेत् ॥ ३३ ॥
कवचं चास्त्रमालिख्य वह्निजायां पुनर्लिखेत् ।
अनेन मनुना देवि योगिनीनां बलिं हरेत् ॥ ३४ ॥
षड्दीर्घस्वरसंभिन्नं क्षकारं विलिखेत्प्रिये ।
स्थानक्षेत्रपदं पालधूपदीपादि चाऽऽलिखेत् ॥ ३५ ॥
सहितं बलिमालिख्य गृह्ण गृह्ण ततो वदेत् ।
वह्निजायान्वितो मन्त्रः क्षेत्रपालस्य सुन्दरि ॥ ३६ ॥

अनेन मनुना देवि क्षेत्रपालबलिः स्मृतः ।
गांगींगूंत्रयमालिख्य ङेन्तं गणपतिं ततः ॥ ३७ ॥
वरान्ते वरदान्ते च सर्वान्ते जनमालिखेत् ।
मे वशं चाऽऽनय प्रोच्य सर्वोपपदमालिखेत् ॥ ३८ ॥
चारान्ते सहितं चोक्त्वा बलिं गृह्ण द्विधापदम् ।
वह्निजायान्वितो मन्त्रो गणपस्य बलिं हरेत् ॥ ३९ ॥
वामाङ्गुष्ठानामिकाभ्यां बटुकस्य बलिं हरेत् ।
तर्जन्यनामिकां चैव मध्यमोपरि योजयेत् ॥ ४० ॥
योन्याकारेण वामेन योगिनीनां बलिर्भवेत् ।
*अङ्गुष्ठमध्यमानाम(मा) योन्याकारेण योजयेत् ॥ ४१
वाममुष्टिं विधायाऽऽदौ तर्जनीं सरलां कुरु ।
अनया मुद्रया देवि क्षेत्रपालबलिर्भवेत् ॥ ४२ ॥
तथा मुष्टेस्तु मध्यस्थामङ्गुलीं दण्डवत्कुरु ।
गैजतुण्डा महामुद्रा गणपस्य बलिर्भवेत् ॥ ४३ ॥
अथ वा वामभागे तु मण्डलं चैकमालिखेत् ।
तत्रैव बलिदानं तु कुर्यात्सर्वार्थसिद्धये ॥ ४४ ॥
+आत्मविद्यां शिवैस्तत्त्वैर्गुरुं संतर्प्य देवताम् ।
संतोष्याऽऽनन्दसहितः सर्वकर्माणि साधयेत् ॥ ४५ ॥
अनेन विधिना देवि पूजयेत्परमेश्वरीम् ।
पञ्चसिंहासनोन्नद्धां परमानन्दरूपिणीम् ॥ ४६ ॥
पञ्चसिंहासनोन्नद्धां चित्कलां चिन्तयेत्सदा ।
वर्णलक्षं जपेन्मन्त्रं तद्दशांशं हुनेत्प्रिये ॥ ४७ ॥
तर्पणं तु तथा कुर्यात्सर्वसौभाग्यवान्भवेत् ॥ ४८ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरेश्वरीयजनविधिर्नाम पञ्चमः पटलः ॥ ५ ॥

---

## अथ षष्ठः पटलः ।

---

श्रीदेव्युवाच—

पञ्चसिंहासनगता कथं सा त्रिपुरा परा ।
कथयस्व महेशान कथं सिंहासनं भवेत् ॥ १ ॥

---

* इदमर्धं ख. पुस्तके नास्ति । + अयं श्लोकः ख. पुस्तके नोपलभ्यते ।

१ क. °स्य ङेन्तं । २ क. °का मध्ये म° । ३ क. राजमुण्डा । ४ ख. °सनान्नदां प°

ईश्वर उवाच—

यथा श्रीत्रिपुरा बाला तथा त्रिपुरभैरवी ।
संपत्प्रदा नाम यस्याः शृणु निर्मलमानसे ॥ २ ॥
शिवचन्द्रौ वह्निसंस्थौ वाग्भवं तदनन्तरम् ।
कामराजं तथा देवि शिवचन्द्रान्वितं ततः ॥ ३ ॥
पृथ्वीबीजान्तवह्न्याढ्यं तार्तीयं शृणु वल्लभे ।
* शक्तिबीजे महेशानि शिवं वह्निं च योजयेत् ॥ ४ ॥
व्योमादिवह्निसंस्थं तु विशेषं शृणु वल्लभे ।
कुमार्याः परमेशानि हित्वा सग तु बैन्दवम् ॥ ५ ॥
त्रिपुरा भैरवी देवी महासंपत्प्रदा प्रिये ।
अनया सदृशी विद्या त्रिषु लोकेषु दुर्लभा ॥ ६ ॥
ब्रह्मानन्दमयी साक्षात्सर्वसाम्राज्यदायिनी ।
ध्यानमस्याः प्रवक्ष्यामि महासंपत्प्रदं प्रिये ॥ ७ ॥
आताम्रार्कसहस्राभां स्फुरच्चन्द्रजटाशिखाम् ।
किरीटरत्नविलसच्चित्राचित्रितमौक्तिकाम् ॥ ८ ॥
स्रवद्रुधिरपङ्काढ्यमुण्डमालावलीयुताम् ।
नयनत्रयशोभाढ्यां पूर्णेन्दुवदनान्विताम् ॥ ९ ॥
मुक्ताहारलताराजत्पीनोन्नतघनस्तनीम् ।
+त्रिवलीखचितालग्नां नानाभरणभूषिताम् ॥ १० ॥
रक्ताम्बरपरीधानां यौवनोन्मत्तरूपिणीम् ।
पुस्तकं चाभयं वामे दक्षिणे चाक्षमालिकाम् ॥ ११ ॥
वरदानरतां नित्यं महासंपत्प्रदां स्मरेत् ।
न्यासपूजादिकं सर्वं कुमार्या इव सुव्रते ॥ १२ ॥
त्रिपुरा भैरवी देवी पञ्चसिंहासनान्विता ।
प्रथमं शृणु देवेशि ब्रह्मा सृष्टिकरो यदा ॥ १३ ॥
निश्चेतनोऽपि देवेशि तदा त्रिपुरदेवताम् ।
समाराध्याभवत्कर्ता सृष्टेस्तु परमेश्वरि ॥ १४ ॥
ब्रह्माणं तं समाराध्य तपसा महता प्रिये ।
शक्रोऽभूद्देवराजोऽयं पूर्वस्यां दिशि पालकः ॥ १५ ॥

---

* इदमर्धं ख. पुस्तके नास्ति । + इदमर्धं ख. पुस्तके नास्ति ।

---

१ ख. °म्भवे त° । २ ख. भित्त्वा । ३ ख. °टाकुलाम् । ४ ख. °म् । वमद्रु° । ५ क. °भा हि तां स° ।

सदा प्रसन्ना त्रिपुरा पूर्वसिंहासनस्थिता ।
शृणु देवि प्रवक्ष्यामि पूर्वसिंहासनस्थिताम् ॥ १६ ॥
वाग्भवं बीजमुच्चार्य जीवप्राणसमन्वितम् ।
सकला भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥ १७ ॥
जीवं प्राणं वह्निसंस्थं शक्रस्वरविभूषितम् ।
विसर्गाढ्यं महेशानि विद्या त्रैलोक्यमातृका ॥ १८ ॥
त्रैलोक्यमोहनी देवि परब्रह्मचिदात्मिका ।
चैतन्यभैरवी नाम चेतना निष्कले शिवे ॥ १९ ॥
उद्यद्भास्वत्सहस्राभां नानालंकारभूषिताम् ।
मुकुटोज्ज्वलसच्चन्द्रलेखां रक्ताम्बरान्विताम् ॥ २० ॥
पाशाङ्कुशधरां नित्यां वामहस्तकपालिनीम् ।
वरदाभयशोभाढ्यां पीनोन्नतघनस्तनीम् ॥ २१ ॥
एवं ध्यात्वा यजेद्देवीं पूर्वसिंहासनस्थिताम् ।
द्विरावृत्त्या षडङ्गानि न्यसेत्सर्वाङ्गलक्षणम् ॥ २२ ॥
यन्त्रमस्याः प्रवक्ष्यामि देवि त्रैलोक्यमोहनम् ।
त्रिकोणं चैव षट्कोणं वसुपत्रं वरानने ॥ २३ ॥
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ।
तत्राऽऽवाह्य महादेवीं पूर्ववत्परमेश्वरीम् ॥ २४ ॥
मुद्राः प्रदर्शयेत्पश्चात्परिवारार्चनं यजेत् ।
प्रथमावरणं देवि षडङ्गानां तु पूर्ववत् ॥ २५ ॥
रत्यादिकास्ततः पूज्याः पूर्ववत्परमेश्वरि ।
अग्रे वसन्तं वामे तु कामदेवं वरानने ॥ २६ ॥
चापं दक्षिणकोणे च बाणान्पूर्ववदद्रिजे ।
डाकिनीं राकिनीं चैव लाकिनीं काकिनीं तथा ॥ २
शाकिनीं हाकिनीं देवि पश्चिमादिक्रमाद्यजेत् ।
अनङ्गकुसुमा मुख्या वसुपत्रेषु पूर्ववत् ॥ २८ ॥
परभृत्सारसौ चैव शुकमेघाह्वयौ पुनः ।
अपाङ्गभ्रूविलासौ च हावभावौ प्रपूजयेत् ॥ २९ ॥
इन्द्राद्या लोकपालास्तु क्रमेण परिपूजयेत् ।
पूर्वसिंहासने देवि कथिता वीरवन्दिते ॥ ३० ॥

---

१ ख. निष्कले । २ क. °त्वा जपेद्दे° । ३ ख. मुद्रादि दर्शयन्पश्चा° ।

कामेश्वरी च रुद्राणी पूर्वसिंहासनस्थिता ।
एतस्या एव विद्याया बीजद्वयमुदाहृतम् ॥ ३१ ॥
तदन्ते परमेशानि नित्यक्लिन्ने मदद्रवे ।
एतस्या एव तार्तीयं रुद्राणी परमेश्वरि ॥ ३२ ॥
पूजाध्यानादिकं देवि चैतन्यायाश्च पूर्ववत् ।
त्रिकोणे तु विशेषोऽस्ति कथयामि तवानघे ॥ ३३ ॥
अग्रकोणक्रमेणैव नित्यां क्लिन्नां मदद्रवाम् ।
षडङ्गावरणात्पश्चात्पूजयेत्सर्वसिद्धये ॥ ३४ ॥
अनेनैव प्रकारेण पूर्वसिंहासनस्थिताम् ।
त्रिपुरां भैरवीं देवीं पूजयेत्परमेश्वरीम् ॥ ३५ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे पूर्वसिंहासनकथनं नाम षष्ठः पटलः ॥ ६ ॥

---

अथ सप्तमः पटलः ।

---

ईश्वर उवाच—

एतामाराध्य देवेशि महात्रिपुरभैरवीम् ।
पालकोऽभून्निश्चलोऽपि प्रेतत्वात्सुरवन्दिते ॥ १ ॥
योगनिद्राछलाद्देवि प्रेतत्वं तस्य निश्चलम् ।
तद्ध्यानेन स्वयं शक्तिरभूत्कुवलयेक्षणे ॥ २ ॥
तामाराध्य महाविष्णुरघोरेण मुखेन च ।
त्रिपुरो निर्जितो देवि त्रैलोक्यभयकारकः ॥ ३ ॥
तदा सिंहासने प्रौढा दक्षिणे परमेश्वरि ।
मन्त्रं तस्याः प्रवक्ष्यामि रिपुभारनिकृन्तनम् ॥ ४ ॥
शिवचन्द्रौ मादनान्तं पान्तं वह्निसमन्वितम् ।
शक्तिभिन्नं बिन्दुनादकलाढ्यं वाग्भवं प्रिये ॥ ५ ॥
संपत्प्रदाया भैरव्याः कामराजं तदेव हि ।
सदाशिवस्य बीजं तु सिंहासनगतस्य च ॥ ६ ॥
एषा विद्या महेशानि वर्णितुं केन शक्यते ।
ध्यानमस्याः प्रवक्ष्यामि रिपुभारनिकृन्तनम् ॥ ७ ॥

---

१ क. °न्या इव पू° । २ क. °रणं पश्चा° । ३ ख. °द्राछला° । ४ ख. °णे । तमा° । ५ ख. °ष्णुमघो° ।

उद्यत्सूर्यसहस्राभां चन्द्रचूडां त्रिलोचनाम् ।
नानालंकारसुभगां सर्ववैरिनिकृन्तनीम् ॥ ८ ॥
स्रवद्रुधिरमुण्डालिकलितां रक्तवाससम् ।
त्रिशूलं डमरुं चैव खड्गं खेटकमेव च ॥ ९ ॥
पिनाकं च शरान्देवि पाशाङ्कुशयुगं क्रमात् ।
पुस्तकं चाक्षमालां च शिवसिंहासने स्थिताम् ॥ १० ॥
एवं ध्यात्वा महेशानि पूजामण्डलमारभेत् ।
त्रिकोणं चैव वृत्तं च वृत्ताष्टदलनीरजम् ॥ ११ ॥
वृत्तं भूसदनोपेतमेषा त्रिपुरयन्त्रिका ।
वामां ज्येष्ठां च रौद्रीं च कालीं च वरलोचने ॥ १२ ॥
कलाढ्यां च बलाढ्यां च यजेद्विकरिणीं प्रिये ।
बलप्रमथिनीं चैव सर्वभूतान्तमावदेत् ॥ १३ ॥
दमनीं च तथाऽर्चित्वा मनोन्मनीपदान्विताम् ।
एवं पीठं समभ्यर्च्य ततः सिंहासनं यजेत् ॥ १४ ॥
अघोरविद्यारूपं तु महापापनिकृन्तनम् ।
अघोरे वाग्भवं देवि घोरे तु भुवनेश्वरीम् ॥ १५ ॥
घोरघोरतरेभ्यश्च विलिख्य सुरवन्दिते ।
सर्वेभ्यः सर्वशर्वेभ्यो देव्या बीजयुगं लिखेत् ।
नमस्तेऽस्तुपदं कुर्याद्रुद्ररूपे हसौ लिखेत् ॥ १६ ॥
त्रिंशद्भिश्च त्रिभिर्वर्णैर्विद्येयं कथिता प्रिये ।
अनेन मनुना देवि यजेत्सिंहासनं बुधः ॥ १७ ॥
आवाहनादिकं कुर्यात्क्रमार्चनमतः परम् ।
आदावङ्गावृत्तिर्देवि द्विरावृत्त्याऽङ्गपूजनम् ॥ १८ ॥
रत्यादित्रयमभ्यर्च्य तथाऽनङ्गादिका यजेत् ।
ब्राह्म्यादियुग्मं संपूज्य वसुपत्रेषु मातृकाः ॥ १९ ॥
भूबिम्बे लोकपालांश्च सायुधान्परमेश्वरि ।
द्वितीयसिंहासनगां पूजयेद्रुद्रभैरवीम् ॥ २० ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे द्वितीयसिंहासने रुद्रभैरवीयजनं नाम सप्तमः पटलः ॥ ७ ॥

---

१ ख. च विष्णुसिं॰ । २ ख. ॰माचरेत् । ३ ख. ॰लमाद्रिजे । वृ॰ । ४ ख. भूमण्डलावी
५ ख. तथा यष्ट्वा म॰ । ६ क. ॰वं चोक्त्वा अघोरे भु॰ । ७ क. ॰रे रम्ये शर्वे सर्वाधिदेवते ।
८ ख. ॰दिसंकल्पक॰ ।

अथाष्टमः पटलः।

---

ईश्वर उवाच—

पश्चिमे भैरवी देवी षट्कूटा परमेश्वरी।
यत्स्फूर्त्या स शिवो देवि सृष्टिसंहारणक्षमः ॥ १ ॥
डाकिनीराकिनीबीजे लाकिनीकाकिनीयुगात्।
बीजे आहृत्य देवेशि योजयेच्चन्द्रसूर्ययोः ॥ २ ॥
आद्यमैकारसंयुक्तमन्यदौकारमण्डितम्।
शक्रस्वरसमायुक्तं तार्तीयं बीजमालिखेत् ॥ ३ ॥
बिन्दुनादकलाक्रान्तं तृतीयं शैलसंभवे।
एषा विद्या महेशानि रुद्रसिंहासने स्थिता ॥ ४ ॥
ध्यानमस्याः प्रवक्ष्यामि सर्वभूतनिकृन्तनम्।
बालसूर्यप्रभां देवीं जपाकुसुमसंनिभाम् ॥ ५ ॥
मुण्डमालावलीरम्यां बालसूर्यसमांशुकाम्।
सुवर्णकलशाकारपीनोन्नतपयोधराम् ॥ ६ ॥
पाशाङ्कुशौ पुस्तकं च दधानां जपमालिकाम्।
एवं ध्यात्वा यजेद्देवीं मानसैरुपचारकैः ॥ ७ ॥
द्विरावृत्त्या षडङ्गानि विधाय परमेश्वरि।
यन्त्रमस्या वरारोहे त्रिकोणं तत्पुटं लिखेत् ॥ ८ ॥
बाहिरष्टदलं पद्मं रविपत्रं समालिखेत्।
चतुरस्रं चतुर्द्वारमेवं मण्डलमालिखेत् ॥ ९ ॥
षडङ्गावरणं देवि पूर्ववत्पूजयेत्प्रिये।
रत्यादित्रितयं देवि त्रिकोणे परिपूजयेत् ॥ १० ॥
डाकिन्याद्यास्तु षट्कोणे वसुपत्रे ततः परम्।
ब्राह्म्यादियुगुलं पश्चाद्रविपत्रे ततः परम् ॥ ११ ॥
बालायाः पीठशक्तीस्तु वामाद्याः पूजयेत्प्रिये।
चतुरस्रे लोकपालान्सायुधान्परमेश्वरि ॥ १२ ॥
एवं पूजाविधिं कुर्याद्भोगमोक्षफलाप्तये।
अनेनैव विधानेन नित्याख्यां भैरवीं यजेत् ॥ १३ ॥

---

१ क. देवि ष°। २ ख. °युगम्। बी°। ३ ख. °रक्रमाद्देवि ता°। ४ ख. °न्तं त्रितयं शै°। ५ ख. °तघनस्तनीम्। ६ ख. °त्रं ततो लि°। ७ ख. °फलप्रदम्। अ°।

सर्वसौभाग्यदां नित्यां सर्वसाम्राज्यदायिनीम् ।
एतस्या एव विद्यायाः षड्वर्णान्क्रमतः स्थितान् ॥ १४ ॥
विपरीतान्वदेद् प्रौढे विद्येयं भोगमोक्षदा ।
नित्याख्या भैरवी देवि रिपुमारनिकृन्तनी ॥ १५ ॥
न्यासपूजादिकं सर्वमस्याः पूर्ववदाचरेत् ॥ १६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे पश्चिमसिंहासनकथनं नामाष्टमः पटलः ॥ ८ ॥

---

अथ नवमः पटलः ।

---

ईश्वर उवाच—

शृणु देवि महाविद्यां चिन्तितेष्टफलप्रदाम् ।
यस्या विज्ञानमात्रेण भुवनाधिपतिर्भवेत् ॥ १ ॥
हंसाद्यं वाग्भवं चाऽऽद्यं हसकान्ते सुरेश्वरि ।
भूबीजं भुवनेशानी द्वितीयं बीजमुद्धृतम् ॥ २ ॥
शिवचन्द्रौ महेशानि शक्रस्वरविभूषितम् ।
बिन्दुनादकलाक्रान्तं तृतीयं बीजमुद्धृतम् ॥ ३ ॥
एषा विद्या महेशानि भुवनेश्वरभैरवी ।
मध्यबीजेन देवेशि षड्दीर्घस्वरभेदिना ॥ ४ ॥
षडङ्गानि प्रविन्यस्य ध्यायेद्देवीं चतुर्भुजाम् ।
जपाकुसुमसंकाशां दाडिमीकुसुमप्रभाम् ॥ ५ ॥
चन्द्ररेखाजटाजूटां त्रिनेत्रां रक्तवाससम् ।
नानालंकारसुभगां पीनोन्नतघनस्तनीम् ॥ ६ ॥
पाशाङ्कुशवराभीतीर्धारयन्तीं शिवां स्मरेत् ।
एवं ध्यात्वाऽर्चयेद्देवीं यन्त्रोद्धारं च पूर्ववत् ॥ ७ ॥
चैतन्यभैरवी देवी यन्त्रवरपरमेश्वरि ।
सिंहासनं समभ्यर्च्य परिवारार्चनं यजेत् ॥ ८ ॥
षडङ्गावरणं देवि पूर्ववत्परिपूजयेत् ।
रत्याद्याः पूजयेद्देवि त्रिकोणे तदनन्तरम् ॥ ९ ॥
ब्रह्मा विष्णुश्च रुद्रश्च पूज्यास्तत्रैव सुन्दरि ।
डाकिन्याद्यास्तथा पूज्या वसुपत्रे ततः परम् ॥ १० ॥

---

१ घ. °सौख्यप्रदां । २ क. °श्वरप्रौ° । ३ क. हंसाद्यं ।

अनङ्गकुसुमाद्याश्च ब्राह्मयादियुगुलं ततः ।
भूबिम्बे लोकपालांश्च बटुकाद्यांश्च पूजयेत् ॥ ११ ॥
योगिनीनां चतुःषष्टिं पूजयेत्सुरवन्दिते ।
सदाशिवसखा यस्मात्कुबेरः परमेश्वरि ॥ १२ ॥
येनेयं प्रार्थिता देवी राजराजस्ततो भवेत् ।
तेनैव प्रार्थिता विद्या गौरी गौरफलप्रदा ॥ १३ ॥
अन्नपूर्णेश्वरी नाम सर्वसंपत्प्रदा सताम् ।
अनया विद्यया देवि कुबेरो धननायकः ॥ १४ ॥
लोकपालेषु सर्वेषु धनरत्नादिपूर्णता ।
तथाऽन्नपूर्णता तस्मिन्सुस्थिराऽस्याः प्रसादतः ॥ १५ ॥
अन्नपूर्णा महादेवि साक्षात्कामदुघाऽद्रिजे ।
मन्त्रमस्याः प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ॥ १६ ॥
तारं च भुवनेशानीं श्रीबीजं कामराजकम् ।
हृदन्ते भगवत्यन्नपूर्णा माहेश्वरि पदं लिखेत् ॥ १७ ॥
अन्नपूर्णेऽग्निजाया च विद्येयं विंशदक्षरी ।
अनया सदृशी विद्या सिद्धिदा नास्ति भूतले ॥ १८ ॥
भुवनेशा महेशानि षड्दीर्घस्वरभिन्नया ।
षडङ्गानि महेशानि कुर्यान्न्यासादनन्तरम् ॥ १९ ॥
ऋषिर्ब्रह्माऽस्य मन्त्रस्य पङ्क्तिश्छन्दो वरानने ।
अन्नपूर्णेश्वरी देवि[1] देवता परिकीर्तिता ॥ २० ॥
बीजं च भुवनेशानि श्रीबीजं शक्तिरुच्यते ।
कीलकं कामराजं स्यात्षडङ्गानन्तरं ततः ॥ २१ ॥
* एकमेकं पुनश्चैकं पुनरेकं द्वयं चतुः ।
चतुश्चतुस्तथा द्वाभ्यां पदान्येतानि पार्वति ॥ २२ ॥
पदानि नव देवेशि नव द्वारेषु विन्यसेत् ।
मूर्धादिगुदपर्यन्तं पुनस्तेषु वरानने ॥ २३ ॥
गुदादिब्रह्मरन्ध्रान्तं पदानां नवकं न्यसेत् ।
ब्रह्मरन्ध्रास्यहृदयमूलाधारेष्वनुक्रमात् ॥ २४ ॥

---

* अयं श्लोकः ख. पुस्तके नास्ति ।

---

1 ख. देवी दे° ।

चतुर्बीजानि विन्यस्य स्वरेष्वन्यान्प्रविन्यसेत् ।
गोलकं च ततो देवि विन्यस्य विधिवत्प्रिये ॥ २५ ॥
प्राणायामं प्रकुर्वीत पूजामण्डलमालिखेत् ।
त्रिकोणं च चतुःपत्रं वसुपत्रं ततः परम् ॥ २६ ॥
कलापत्रं च भूबिम्बं चतुर्द्वारं समालिखेत् ।
सिंहासनस्य परितः पीठदेवीः समर्चयेत् ॥ २७ ॥
सिंहासने दक्षिणे तु कथिताः पीठनायकाः ।
ता एव पूजयेत्पीठे वामाद्याः परमेश्वरि ॥ २८ ॥
जया च विजया चैव अजिता चापराजिता ।
नित्या विलासिनी दोग्ध्री अघोरा मङ्गलात्मिका ॥ २९
नवमी परमेशानि सिंहासनसमीपगाः ।
समावाह्य यजेद्देवीं ध्यानं कुर्वन्समाहितः ॥ ३० ॥
तप्तकाञ्चनवर्णाभां बालेन्दुकृतशेखराम् ।
नवरत्नप्रभादीप्तमुकुटां कुङ्कुमारुणाम् ॥ ३१ ॥
चित्रवस्त्रपरीधानां मदिराक्षीं त्रिलोचनाम् ।
सुवर्णकलशाकारपीनोन्नतघनस्तनीम् ॥ ३२ ॥
गोक्षीरधामधवलं पञ्चवक्त्रं त्रिलोचनम् ।
प्रसन्नवदनं शान्तं नीलकण्ठविराजितम् ॥ ३३ ॥
कपर्दिनं स्फुरत्सर्पभूषणं कुन्दसंनिभम् ।
नृत्यन्तमतिसंहृष्टं दृष्ट्वाऽऽनन्दमयीं पराम् ॥ ३४ ॥
सानन्दमुग्धलोलाक्षीं मेखलाढ्यनितम्बिनीम् ।
अन्नदानरतां नित्यां भूमिश्रीभ्यामलंकृताम् ॥ ३५ ॥
एवं ध्यात्वा यजेद्देवि षडङ्गावरणं यजेत् ।
अग्नीशासुरवायव्यमध्ये दिक्ष्वङ्गपूजनम् ॥ ३६ ॥
अथ वक्ष्ये महेशानि त्रिकोणस्य च पूजनम् ।
तारं प्रासादबीजं च हृच्छिवाय ततः परम् ॥ ३७ ॥
सप्ताक्षरी महाविद्या त्वनया देवि पूजयेत् ।
नृत्यन्तमीश्वरं देवि त्रिकोणाग्रे सुरेश्वरि ॥ ३८ ॥
ॐ नमः पदमाभाष्य ततो भगवते पदम् ।
ततो वराहरूपाय भूर्भुवःस्वःपतिं तथा ॥ ३९ ॥

१ क. °पगा । स° । २ क. °हृष्टं दृ° । ३ ख °मुखलोला° । ४ क. °था क्रमेनं भू°

ङेन्तं च भूपतिं च त्वं मे देहीति च दापय ।
वह्निजायान्वितो मन्त्रो वराहस्य वरानने ॥ ४० ॥
अनया विद्यया देवि वामकोणे प्रपूजयेत् ।
ॐनमःपदमाभाष्य ङेन्तं नारायणं लिखेत् ॥ ४१ ॥
नारायणं दक्षकोणे क्रमेण परिपूजयेत् ।
वामदक्षिणयोः पूज्ये भूश्रियौ परमेश्वरि ॥ ४२ ॥
एकेन मनुना देवि कथयामि तवानघे[1] ।
ॐनमो हि पदं चान्नं मे देह्यन्नाधिपान्तके ॥ ४३ ॥
तयेममान्नं[2] संलिख्य प्रदापय ततः परम् ।
वह्निजायान्वितो मन्त्रः संपुटीकृत्य[3] योजयेत् ॥ ४४[4] ॥
ग्लौमात्मकेन रमया वामदक्षिणयोः क्रमात् ।
ततश्चतुर्दले पूज्या[5] पश्चिमादिक्रमेण तु ॥ ४५ ॥
तारेण परविद्यां च भुवनेशीं तदात्मना ।
कमलां रमया भद्रे कामेन सुभगां यजेत् ॥ ४६ ॥
वसुपत्रे महेशानि ब्राह्म्याद्याः पश्चिमादितः ।
षोडशारे परेशानि चन्द्रमण्डलरूपिणीः ॥ ४७ ॥
कलाः षोडश संपूज्याः पश्चिमादिक्रमेण हि ।
अमृता मानसी पुष्टिस्तुष्टिः प्रीती रतिस्तथा ॥ ४८ ॥
श्रीश्च ह्रीश्च स्वधा[6] रात्रिर्ज्योत्स्ना[7] हैमवती तथा ।
छाया च पूर्णिमा नित्या अमावास्या च षोडशी ॥ ४९ ॥
शेषवर्णैः प्रपूज्यास्तु अन्नपूर्णान्तशब्दकाः[8] ।
चतुरस्रे लोकपालान्क्रमेण परिपूजयेत् ॥ ५० ॥
इत्युत्तरपतेः[9] सम्यक्पूजितान्नसुवर्णदा ।
स्वशक्त्या या करोत्येव राजराजं धनाधिपम् ॥ ५१ ॥
सिद्धिप्रदा सिद्धिविद्या ममाप्यन्नप्रदा प्रिये ।
भुवनेश्वरभैरव्या भेदान्तरमथोच्यते ॥ ५२ ॥
सहाद्या सैव देवेशि तदा सा सकलेश्वरी ।
ध्यानपूजादिकं सर्वमेतस्या एव पार्वति ॥ ५३ ॥

---

१ क. °घे । अन्नं महिपदं । २ क. ख. तयेम° । ३ क. °त्य पूज° । ४ ख. पूजां प° । ५ क. °ज पुर° । ६ ख. सुधा । ७ ख. °त्स्ना हेमाव° । ८ क. °र्णास्तु शब्दितः । च° । ९ क. इत्येवं पूजमेतस्य°।

उत्तरस्यां वरारोहे सिंहासनमिदं दिशि ।
संपत्प्रदा भैरवी च विद्धि कौलेशभैरवी ॥ ५४ ॥
हसराद्या भैरवी सा त्रिषु बीजेषु पार्वति ।
इयं तु सहराद्या स्यात्पूजाध्यानादिकं तथा ॥ ५५ ॥
एतस्या एव विद्याया आद्यन्ते रेफवर्जिते ।
तदेयं परमेशानि नाम्ना सकलभैरवी ॥ ५६ ॥
संपत्प्रदा भैरवी च ध्यानपूजादिकं प्रिये ।
पञ्चसिंहासनमयी महात्रिपुरभैरवी ॥ ५७ ॥
चतुराम्नायविद्याभिर्मान्यं सिंहासनं प्रिये ।
हस्रीमात्मकमुच्चार्य सह्रीमात्मकमद्रिजे ॥ ५८ ॥
शक्तिः सकलह्रीमन्ते चतुर्बीजमुदाहृतम् ।
श्रीबीजं कुरु तार्तीयं नित्यां वेदाक्षरी भवेत् ॥ ५९ ॥
उन्मनी नाम विद्येयं भोगमोक्षफलप्रदा ।
पूर्वाम्नाये महाविद्या दक्षिणाम्नाये उच्यते ॥ ६० ॥
वाग्भवं बीजमुच्चार्य क्लिन्ने कामस्य बीजकम् ।
मदद्रवे कुले हस्रौं विद्येयं भोगिनी प्रिये ॥ ६१ ॥
दक्षिणाम्नायविद्येयं पश्चिमाम्नाय उच्यते ।
वाग्भवं च परा श्रीं श्रीं हसखफ्रेमिति प्रिये ॥ ६२ ॥
हस्रौमन्त्रास्ततो देवि पञ्चैते प्रणवाः स्मृताः ।
भगवत्यम्ब आलिख्य पृथक्पदमथेश्वरि ॥ ६३ ॥
चतुर्थं प्रणवं चैव हसखफ्रेमिति प्रिये ।
कुब्जिके चैव ह्स्रां च ह्स्रीं ह्स्रौं ततः परम् ॥ ६४
अघोरे चैव घोरे च त्वघोरमुखि चाऽऽलिखेत् ।
ह्स्रां ह्स्रीं किणिद्वंद्वं विच्चे द्वात्रिंशदक्षरी ॥ ६५ ॥
पूर्वोक्तैः प्रणवैर्देवि संपुटीकृत्य संस्मरेत् ॥
कुब्जिकेयं महाविद्या पश्चिमाम्नायदेवता ॥ ६६ ॥
ख्फ्रेमात्मकमुच्चार्य महाचण्डपदं लिखेत् ।
योगेश्वरीपदं पश्चाद्विद्येयं कालिका प्रिये ॥ ६७ ॥

---

१ ख. °रवी च । २ क. च सिद्धि कौ° । ३ ख. क्तिः कलाभ्यामन्ते च तु
४ ख. विद्या । ५ क. °द् । कामिणी कामवि° । ६ ख. °यमुच्य° । ७ क. °श्च
८ ख. हसभौं च त° । ९ ख. °त । च्छ्रां च च्छ्रीं च कि° ।

उत्तराम्नायविद्येयं नाम्ना कालीति विश्रुता ।
एताभिः परमेशानि पूज्यं सिंहासनं सदा ॥ ६८ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे सिंहासनविद्याविधानं नाम नवमः पटलः ॥ ९ ॥

---

अथ दशमः पटलः ।

---

श्रीदेव्युवाच—

त्रिपुरा त्रिविधा देव भवता प्रकटी कृता ।
त्रिविधेति यदुक्तं तत्प्रकटी कुरु शंकर ॥ १ ॥

ईश्वर उवाच—

परं ब्रह्मस्वरूपं यन्नादबिन्दुत्रयात्मकम् ।
शिवशक्तिमयं तत्तु कथयामि तवानघे ॥ २ ॥
व्याप्य तिष्ठति विश्वं सा शिवं च परमेश्वरि ।
पूर्वं गुणैस्तु कथिता शिवशक्त्यात्मकं शृणु ॥ ३ ॥
हकारादिसकारान्ता मातृका शक्तिरव्यया ।
हकारः परमेशानि केवलं शिव उच्यते ॥ ४ ॥
आद्यन्ताक्षरभावेन तदाऽहं सकलात्मकः ।
यदुच्यते मातृकार्णैस्तत्सर्वमहमीश्वरि ॥ ५ ॥
हकारः परमेशानि शून्यरूपी सदाऽव्ययः ।
सकारः शक्तिरूपत्वात्परावाची विसर्गवान् ॥ ६ ॥
उत्पत्तेः कारणं यस्माच्छक्तिरित्यभिधीयते ।
आत्मानं दर्शयेद्योगः सोऽहंशब्देन सुन्दरि ॥ ७ ॥
बिन्दुत्रयसमायोगान्महात्रिपुरसुन्दरी ।
नादरूपेण सा देवी हकारार्धस्वरूपिणी ॥ ८ ॥
हकारः परमेशानि शिवरूपी यतस्तदा ।
तस्यार्धाङ्गं महाशक्तिर्हकारार्धस्वरूपिणी ॥ ९ ॥
अत एव महाविद्या महात्रिपुरसुन्दरी ।
नित्येति कथ्यते देवि चित्कला परमेश्वरी ॥ १० ॥

---

१ ख. °रान्वय° । २ क. °ताभ्यः प° । ३ ख. °न्दुकलात्म° । ४ °णु । अका° । ५ ख. वर्णे° । ६ ख. °दाशिवः । स° । ७ ख. °श्री च स° ।

श्रीगुरोः कृपया भद्रे संप्रदायकुलान्वितः ।
प्रातरुत्थाय देवेशि गुरुं नत्वा स्वनामभिः ॥ ११ ॥
संध्यास्नानादिकं देवि विधाय मनुवित्तमः ।
सर्वशृङ्गारवेषाढ्यः कर्पूरघुसृणादिभिः ॥ १२ ॥
महार्हैश्चन्दनाद्यैश्च दीप्ताङ्गः कुङ्कुमारुणः ।
नवरत्नविभूषाढ्यो रक्ताम्बरविराजितः ॥ १३ ॥
ताम्बूलरागवदनो मदिरानन्दमानसः ।
यागमन्दिरमागत्य लाक्षाचित्रविचित्रितम् ॥ १४ ॥
अनेकधूपबहलं पुष्पप्रकरपूरितम् ।
गोमयेन च संलिप्तं चारुपुष्पवितानितम् ॥ १५ ॥
मनोहरे मृदुश्लक्ष्ण आसने उपविश्य तु ।
मन्त्रोद्धारं प्रकुर्वीत सर्वकार्यार्थसिद्धये ॥ १६ ॥
आद्यं वाग्भवमुच्चार्य कामराजं द्वितीयकम् ।
कुमार्यास्तु तृतीयं तु त्रिपुरा परमेश्वरि ॥ १७ ॥
करशुद्धिकरी विद्या प्रथमा *परमेश्वरि ।
कुमारी तु द्वितीया स्यात्त्रिपुरेशी महेश्वरि ॥ १८ ॥
त्रिपुरेश्यादिमं त्यक्त्वा भुवनेशीं परिक्षिपेत् ।
अनयाऽऽत्मासनं दद्यात्त्रिपुरेश्या षडङ्गकम् ॥ १९ ॥
त्रिपुरेशी महेशानि त्रिबीजा हृस्थिता यदा ।
चक्रासनगतां देवि विद्धि त्रिपुरवासिनीम् ॥ २० ॥
त्रिपुरेशी महेशानि वाग्भवे कामराजके ।
शिवचन्द्रसमायुक्ता तार्तीये शिवरूपिणी ॥ २१ ॥
सर्वमन्त्रासनगता त्रिपुरा श्रीरियं प्रिये ।
आत्मासनगतायास्तु हित्वा तार्तीयमद्रिजे ॥ २२ ॥
बलेर्मात्मकमारोप्य साध्यसिद्धासनस्थिता ।
(+त्रिपुरामालिनी प्रोक्ता सिद्धाख्यां त्रिपुरां शृणु ॥२३॥

---

* एतस्याग्रे क. ग. पुस्तकयोः 'श्री बीजं च तृतीयं तु त्रिपुरा परमेश्वरि' इतीदमर्धं दृश्यते।
+ धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तकस्थः ।

---

१ ख. °हाम्मृगमदोद्दाम लिप्ता° । २ ख. मदनान° । ३ ख. °पूजित° । ४ क. मातृक° ।
५ ख. ' त्रिपुरा मालिनीयं तु आद्या लक्ष्मी परा ततः । देवि त्रिपुरासिद्धेयं कथिता परमेश्वरि । '
इति पाठान्तरम् ।

भुवनेशी श्रिया युक्ता कुमारी च तथोत्तमा ।
मूर्तिविद्या समुद्दिष्टा माया लक्ष्मीः पुरःस्थिता ॥ २४ ॥
अनया विद्यया देवि यजेत्त्रिपुरसिद्धिकाम् । )
* मायालक्ष्म्योस्तु बीजे द्वे शक्तिबीजं तृतीयकम् ॥ २५ ॥
त्रिपुराद्या ऽयम्बिकेयमष्टमी परिकीर्तिता ।
संपत्प्रदा भैरवी या तस्यास्तार्तीयबीजके ॥ २६ ॥
बिन्दुं हित्वा तत्र सर्गं निक्षिपेत्सुरसुन्दरि ।
अनयाऽऽवाहनं देवि कारयेत्सुरवन्दिते ॥ २७ ॥
मूर्तिविद्या समुद्दिष्टा माया लक्ष्मीः परा स्थिता ।
अनया विद्यया देवि यजेत्त्रिपुरसिद्धिदा[म्] ॥ २८ ॥
सिद्धाम्बा[1] वाहिनीमूर्तिविद्या च सुरसुन्दरि ।
मूलविद्यां शृणु[2] प्रौढे सकलागमसेविताम् ॥ २९ ॥
सर्वदर्शनवन्द्यां च चित्कलामव्ययां प्रिये ।
भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनो ॥ ३० ॥
अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ।
महात्रिपुरसुन्दर्या मन्त्रा[3] मेरुसमुद्भवाः ॥ ३१ ॥
लकारात्पृथिवी देवि सशैलवनकानना ।
पञ्चाशत्पीठसंपन्ना सर्वतीर्थमयी परा ॥ ३२ ॥
सर्वगङ्गामयी सर्वक्षेत्रस्थानमयी शिवे ।
सकाराच्चन्द्रताराद्रिग्रहराशिस्वरूपिणी ॥ ३३ ॥
हकाराच्छिवसंवादव्योममण्डलसंस्थिता ।
ईकाराद्विश्वकर्त्रीयं माया तुर्यात्मिका प्रिये ॥ ३४ ॥
एकाराद्वैष्णवी शक्तिर्विश्वपालनतत्परा ।
रकारात्तेजसा युक्ता परं ज्योतिःस्वरूपिणी ॥ ३५ ॥
ककारात्कामदा कामरूपिणी स्फुरदव्यया ।
अर्धचन्द्रेण देवेशि विश्वयोनिरितीरिता ॥ ३६ ॥
बिन्दुना शिवरूपेण शून्यरूपेण साक्षिणी ।
अनया सह सर्वत्र व्याप्तिनिश्चलताऽऽत्मना[5] ॥ ३७ ॥

---

* अयं श्लोकः ख. पुस्तके नास्ति ।

---

१ क. °द्धाम्बा वा° । २ क. °विद्यां च शृणु सु° । ३ क. मन्त्रो मे° । ४ क. °द्भवः । ख° । ५ ख. व्याप्य नि° ।

एवं परब्रह्मरूपा मेरुणाऽनेन सुव्रते ।
एभिर्नवात्मकैर्वर्णैर्जायते त्रिपुरामनुः ॥ ३८ ॥
अन्यथा नैव निष्पत्तिर्नास्ति श्रीत्रिपुरामनौ ।
श्रीचक्रमपि देवेशि मेरुरूपं न संशयः ॥ ३९ ॥
लकारः पृथिवीबीजं तेन भूबिम्बमुच्यते ।
सकारश्चन्द्रमा भद्रे कलाषोडशकात्मकः ॥ ४० ॥
तस्मात्षोडशपत्रं तु हकारः शिव उच्यते ।
अष्टमूर्तिः सदा भद्रे तस्माद्वसुदलं भवेत् ॥ ४१ ॥
ईकारस्तु महामाया भुवनानि चतुर्दश ।
पालयन्ती परा तस्माच्छक्रकोणं भवेत्प्रिये ॥ ४२ ॥
शक्तिरेकादशस्थाने स्थित्वा सूते जगत्त्रयम् ।
विश्वयोनिरिति ख्याता सा विष्णुर्दशरूपकम् ॥ ४३
रकारात्परमेशानि चक्रं व्याप्य विजृम्भते ।
दशकोणकरी यस्माद्रकारो ज्योतिरव्ययः ॥ ४४ ॥
कलादशान्वितो वह्निर्दशकोणप्रकारकः ।
ककारान्मदनो देवि शिवश्चाष्टस्वरूपकः ॥ ४५ ॥
योनिवश्यं तदा चक्रे वसुयोन्यङ्कितं भवेत् ।
अर्धमात्रा गुणान्सूते नादरूपा यतस्ततः ॥ ४६ ॥
त्रिकोणरूपा योनिस्तु बिन्दुना बैन्दवं भवेत् ।
कामेश्वरस्वरूपं तु विश्वाकारस्वरूपकम् ॥ ४७ ॥
श्रीचक्रं तु वरारोहे श्रीविद्यावर्णसंभवम् ।
तत्र प्राङ्मुख आसीनश्चक्रराजं समालिखेत् ॥ ४८ ॥
भूप्रदेशे समे वर्ये सिन्दूररजसाऽथ वा ।
कुङ्कुमस्य रजोभिस्तु भूमौ चक्रं समालिखेत् ॥ ४९
ऋजुरेखं नेत्ररम्यं संधिभेदसमं ऋजु ।
अथ वा हेमरौप्याभ्यां ताम्रेण बहुधातुभिः ॥ ५०
पट्टं विरच्य श्रीखण्डरक्तचन्दनसंभवे ।
पट्टे संस्थाप्य विलिखेल्लेखन्या हेमया प्रिये ॥ ५१

---

१ ख. °था सैव । २ ख. °स्तु सदा मा । ३ क. ग. °रेव दश° । ४ ख. मू
५ ख. °री तस्माद्रकाराज्ज्योति° । ६ ख. °प्रवर्तकः । ७ क. शिवं चाष्ट° । ८ क. °क
°निरस्थ त इति पाटान्तरम् । १० ख. चक्रं त इति पाठान्तरम् । ११ क. ग. °मतार

रोचनाकुङ्कुमाभ्यां तु कस्तूरीचन्दनेन्दुभिः ।
ईशानादग्निपर्यन्तमृजुरेखां समालिखेत् ॥ ५२ ॥
ईशादग्नेस्तदग्राभ्यां रेखे आकृष्य देशिकः ।
एकीकृत्य च वारुण्यां शक्तिरेखा परा प्रिये ॥ ५३ ॥
त्रिकोणाकाररूपेयं तस्या उपरि संलिखेत् ।
त्रिकोणाकाररूपं तु शक्तिद्वयमुदाहृतम् ॥ ५४ ॥
पूर्वशक्त्यग्रभागे तु मानयष्टिवदालिखेत् ।
रेखां तु परमेशानि वायुराक्षसकोणगाम् ॥ ५५ ॥
संधिभेदक्रमेणैव तयोः शक्त्योस्ततः परम् ।
रेखे आकृष्य कोणाभ्यां तदग्रात्पूर्वगे कुरु ॥ ५६ ॥
वह्निमण्डलमेतत्तु पूर्वाग्रं वीरवन्दिते ।
चक्रत्रयमभूत्तत्र ततः शृणु वरानने ॥ ५७ ॥
पूर्वशक्तीशवह्निभ्यां कोणाभ्यां सुरवन्दिते ।
पूर्वरेखां तु विस्तार्य तथा पश्चिमवह्नितः ॥ ५८ ॥
वायुराक्षसकोणाभ्यां रेखां[1] पश्चिमगां तथा ।
विस्तार्य योजयेद्देवि संधिभेदक्रमेण तु ॥ ५९ ॥
योन्यग्रगां पूर्वदेशे दक्षिणोत्तरतः क्रमात् ।
तथा रेखे[2] वह्निसंस्थे पश्चिमस्यां दिशि क्रमात् ॥ ६० ॥
कोणाग्राभ्यां[3] योजयित्वा दशकोणं तथा[4] भवेत् ।
तथैव देवदेवेशि द्वितीयं दशकोणकम् ॥ ६१ ॥
ईशानवह्निगे रेखे पूर्वयोन्यग्रयोः क्रमात् ।
विस्तार्य योजयेत्पश्चात्पश्चिमायां दिशि क्रमात् ॥ ६२ ॥
वायुराक्षसकोणाग्रे रेखे विस्तार्य सुन्दरि ।
पश्चिमाग्रे तथा देवि योजयेदिन्द्रदिग्गते ॥ ६३ ॥
एकत्र पूर्वकोणाग्रचुम्बिनी तु मनोहरा ।
योजयेद्देवदेवेशि यथा पङ्क्त्यस्रकं भवेत् ॥ ६४ ॥
दक्षकोणस्य देवेशि त्यक्त्वा कोणचतुष्टयम् ।
दशकोणान्तरे देवि मध्ये रेखे प्रकाशयेत्[5] ॥ ६५ ॥

---

१ ख. रेखाभ्यां पश्चिमां त° । २ ख. °खेयोनिसं° । ३ ख. °णाग्रगां यो° । ४ ख. यथा । ५ क. दक्षिणोत्तरयोर्देवि मध्ये रेखाः प्र° ।

द्वे दक्षिणे विभागे तु तथा चोत्तरभागके ।
षट्कोणस्य ततो देवि संधिभेदक्रमेण तु ॥ ६६ ॥
योनिं वह्निं च संयोज्य शक्कारं जायते सदा ।
कक्षामध्यगता रेखा ऋजुरूपास्तु योजयेत् ॥ ६७ ॥
ऋज्वाकृति यथा देवि जायतेऽतिमनोहरम् ।
संमुखं पञ्चशक्त्यग्रं प्रागूवक्त्रं चतुरग्निकम् ॥ ६८ ॥
बिन्दुत्रिकोणे वस्वारचक्रमेतद्वरानने ।
चक्रमध्यं तु जानीहि दशारयुगुलं तथा ॥ ६९ ॥
शक्रयोन्यङ्कितं देवि बाह्यमध्यगतं भवेत् ।
एतच्चक्रं महेशानि सर्वसौभाग्यवर्धनम् ॥ ७० ॥
सर्वसाम्राज्यदं देवि सर्वोपद्रवनाशनम् ।
अनेकरत्नमाणिक्यसुवर्णपरिपूरकम् ॥ ७१ ॥
महामोक्षप्रदं देवि वाग्विलासकरं महत् ।
एतद्बाह्ये महेशानि वृत्तं पूर्णेन्दुसंनिभम् ॥ ७२ ॥
तद्युक्तं कुरु मीनाक्षि वसुपत्रं मनोहरम् ।
ततः षोडशपत्रं तु विलिखेत्सुरवन्दिते ॥ ७३ ॥
तद्बाह्ये देवदेवेशि त्रिवृत्तं मातृकान्वितम् ।
चतुरस्रं चतुर्द्वारसहितं परमेश्वरि ॥ ७४ ॥
चतुःषष्टियुताः कोष्ठो योगिनीनां महौजसाम् ।
चक्रेऽस्मिन्संनिविष्टास्ताः साधकं मानयन्ति हि ॥ ७५ ॥
चतुरस्रं मातृकार्णैर्मण्डितं सिद्धिहेतवे ।
मुक्तामाणिक्यघटितं समस्थलविराजितम् ॥ ७६ ॥
त्रैलोक्यमोहनं नाम कल्पद्रुमफलप्रदम् ।
षोडशारं चन्द्रबिम्बरूपं तु सकलालयम् ॥ ७७ ॥
सर्वाशापूरकं भद्रे स्रवत्पीयूषवर्षणम् ।
अष्टपत्रं महेशानि जपाकुसुमसंनिभम् ॥ ७८ ॥
सर्वसंक्षोभणं नाम सर्वकामप्रपूरकम् ।
एतत्त्रयं महेशानि सृष्टिचक्रं सुखप्रदम् ॥ ७९ ॥

---

१ ख. °ने । मध्यचक्रं तु । २ ख. सर्वोपद्रन्धना° । ३ ख. °कद्वयमा° । ४ ख. मा
५ ख. °स्मिन्सामविशेषास्ताः । ६ ख. °वर्षितम् ।

पूर्वाम्नायाधिदेव्या तु मण्डितं सर्वसिद्धिदम् ।
चतुर्दशारं देवेशि दाडिमीकुसुमप्रभम् ॥ ८० ॥
अनन्तफलदं भद्रे सर्वसौभाग्यसंप्रदम् ।
दशारं तप्तहेमाभं सिन्दूरसदृशं प्रिये ॥ ८१ ॥
सर्वार्थसाधकं चक्रं मनश्चिन्तितदं सदा ।
द्वितीयमपि पङ्क्त्यस्रं जपाकुसुमसंनिभम् ॥ ८२ ॥
सर्वरक्षाकरं चक्रं महाज्ञानमयं शिवे ।
एतत्त्रयं महेशानि स्थितिचक्रं सुखप्रदम् ॥ ८३ ॥
दक्षिणाम्नायपूज्यं तु यथेप्सितफलप्रदम् ।
अष्टकोणं वरारोहे बालार्ककिरणारुणम् ॥ ८४ ॥
पद्मरागसमप्रख्यं सर्वरोगहरं सदा ।
उद्यत्सूर्यसहस्राभं बन्धूककुसुमप्रभम् ॥ ८५ ॥
सर्वसिद्धिप्रदं चक्रं सकलालयमीश्वरि ।
त्रिकोणं सर्वसंभूतिकारणं भूतिदं सदा ॥ ८६ ॥
बिन्दुचक्रं वरारोहे सर्वानन्दमयं परम् ।
सदाशिवमयं चक्रनायकं परमेश्वरि ॥ ८७ ॥
एतच्चक्रं तु संहाररूपं ब्रह्ममयं सदा ।
पश्चिमाम्नायसंसेव्यं त्रयमुत्तरसेवितम् ॥ ८८ ॥
अस्मिंश्चक्रे षडध्वानो वर्तन्ते वीरवन्दिते ।
चक्रपत्रेषु देवेशि पदाध्वा तु निगद्यते ॥ ८९ ॥
चक्रत्रिसंधिभागेषु भुवनाध्वा व्यवस्थितः ।
वर्णाध्वा मातृकारूपी कथयामि तवानघे ॥ ९० ॥
वर्गाष्टकं मातृकाया दिक्षु सिद्धं यतः क्रमात् ।
पार्थिवं तन्मयं विद्धि षोडशारं कलात्मकम् ॥ ९१ ॥
अष्टपत्रं कादिवर्णैः क्षान्तैर्दिक्षु विदिक्षु च ।
कादिढान्ताः शक्रवर्णाः शक्रकोणेषु संस्थिताः ॥ ९२ ॥
णकारादिभकारान्ता दशवर्णा दशारके ।
मकारादिशकारान्ता द्वितीयेऽपि दशारके ॥ ९३ ॥
वर्णाष्टकं चाष्टकोणे त्रिकोणे कथयामि ते ।
अकथादित्रिकोणान्तं हक्षयुग्मं तु मध्यगम् ॥ ९४ ॥

---

१ ख. सिद्धीर्यतः प्रिये । पा° । २ क. °लासक° । ३ ख. °वर्गैः । ४ क. °दिक्षका° ।

वर्णाध्वा कथितो देवि मातृकापीठरूपकः ।
षट्त्रिंशत्तत्त्वभरितं चक्रं मूलानुसारतः ॥ ९५ ॥
तत्त्वाध्वा कथितो देवि तत्त्वरूपो वरानने ।
पञ्चसिंहासनोन्नद्धक*लाध्वा चक्रशासनात् ॥ ९६
सबाला भैरवीयुक्ता महात्रिपुरसुन्दरी ।
त्रिपुरा त्र्यम्बिकान्ताढ्या चक्रं प्राप्य विजृम्भते ॥
मन्त्राध्वाऽयं समाख्यातो निश्चयेन सदाऽनघे ।
+ एवं षडध्वविमलं श्रीचक्रं परिचिन्तयेत् ॥ ९८ ॥
उत्तराशामुखो देवि यदा चक्रं समुद्धरेत् ।
उत्तराशा तदा देवि पूर्वाशैव निगद्यते ॥ ९९ ॥
ईशानकोणं देवेशि तदाऽऽग्नेयं न संशयः ।
पश्चिमादिङ्मुखो मन्त्री यदा चक्रं समुद्धरेत् ॥ १०
पश्चिमाशा तदा ज्ञेया पूर्वाशैव न संशयः ।
वायुकोणं तदाग्नेयमैशानं राक्षसं भवेत् ॥ १०१ ॥
दक्षिणाभिमुखो मन्त्री यदा चक्रं समुद्धरेत् ।
पूर्वाशैव तदा सा दिग्रक्षःकोणं तु वह्निवत् ॥ १०२
एतच्चक्रं मेरुरूपं श्रीविद्यार्णैः समुद्धृतम् ।
सर्वागममयं देवि कथितं वीरवन्दिते ॥ १०३ ॥
इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे दशमः पटलः ॥ १० ॥

---

अथैकादशः पटलः ।

---

ईश्वर उवाच—

एभिर्वर्णैस्तु देवेशि त्रिपुरा कथ्यतेऽधुना ।
नवाक्षरो महामेरुरयं ब्रह्माण्डगोलकः ॥ १ ॥
चतुरस्रं च कोदण्डं त्रिकोणं तत्पुटं मुखम् ।
निरालम्बं तवाऽऽख्यातमेतद्ब्रह्माण्डमण्डलम् ॥ २

---

* ख. पुस्तके निवृत्तिः, प्रतिष्ठा, विद्या, शान्तिः, शान्त्यतीता, एतत्कलापञ्चक पुस्तके—क्रमस्त्वन्यत्रेत्थम्—कलाध्वा, तत्त्वाध्वा, भुवनाध्वा, वर्णाध्वा, पदाध्वा, मन्त्र तु यथायथं स्थानविशेषानुगुणः क्रमो द्रष्टव्यः ।

---

१ ख. °नुरूपतः । २ क. ग. °रूपं व° । ३ क. ग. °श्चलेन ।

लकारश्चतुरस्रं स्यात्पृथ्वीबीजतया प्रिये ।
अर्धमात्रा तु कोदण्डं स्रवत्पीयूषवर्षिणी ॥ ३ ॥
त्रिकोणरूपी वह्निः स्यात्त्रिकोणत्वात्परा शिवा ।
एकारश्च रकारश्च ईकारश्च त्रयं भवेत् ॥ ४ ॥
मायाविकाररूपेण षट्कोणाश्रयरूपिणी ।
हकारो व्योमरूपत्वाद्बिन्दुश्च मुखमण्डले ॥ ५ ॥
इच्छारूपेण कामस्तु सर्वत्र परमेश्वरि ।
तस्मान्मादनमाख्यातमेतद्वै मेरुमण्डलम् ॥ ६ ॥
शृणु देवि प्रवक्ष्यामि बीजं कामेश्वरीमतम् ।
सकला भुवनेशानि कामेशीबीजमुत्तमम् ॥ ७ ॥
अनेन सकला विद्याः कथयामि विशेषतः ।
शक्त्यर्णस्तुर्यवर्णोऽयं कलमध्ये सुलोचने ॥ ८ ॥
वाग्भवं पञ्चवर्णं तु कामराजमथोच्यते ।
मादनं शिवचन्द्राद्यं शिवान्तं मीनलोचने ॥ ९ ॥
कामराजमिदं भद्रे षड्वर्णं सर्वमोहनम् ।
शक्तिबीजं वरारोहे चन्द्राद्यं सर्वसिद्धिदम् ॥ १० ॥
चतुरक्षररूपं तु त्र्यक्षरी त्रिपुरा परा ।
सर्वतीर्थमयी देवि सर्वदेवस्वरूपिणी ॥ ११ ॥
सर्वशास्त्रमयी विद्या सर्वयोगमयी परा ।
सर्वयज्ञमयी संवित्सर्वज्ञानस्वरूपिणी ॥ १२ ॥
सर्वदेवमयी साक्षात्सर्वसौभाग्यसुन्दरी ।
एनामुपास्य देवेशि कामः सर्वाङ्गसुन्दरः ॥ १३ ॥
कामराजो भवेद्देवि नित्येयं ब्रह्मरूपिणी ॥ १४ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे एकादशः पटलः ॥ ११ ॥

---

अथ द्वादशः पटलः ।

---

श्रीदेव्युवाच—

एतस्या देवदेवेश भेदान्कथय सुन्दर ।
केन केनोपासितेयं विशदी कुरु तत्त्वतः ॥ १ ॥

---

१ ख. °अभयं प्रि° । २ ख. °श्च सका° । ३ ख. °क्त्यन्तरस्तु° ।

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि लोपामुद्राभिधां वराम्¹ ।
कामराजाख्यविद्यायाः शक्तिं तुर्यां च सुन्दरि ॥ २
हित्वा मुखे शिवेन्द्राढ्या लोपामुद्रा प्रकाशिता ।
अगस्त्योपासिता विद्या त्रैलोक्यक्षोभकारिणी ॥ ३
एषा विद्या कामराजपूजितैव न संशयः ।
विद्याद्वयमिदं मन्त्रे दुर्लभं भुवनत्रये ॥ ४ ॥
कामराजाख्यविद्याया वाग्भवेन वरानने ।
विद्योद्धारं प्रवक्ष्यामि शक्तिमादनमध्यगम् ॥ ५ ॥
शिवं कुर्याद्वाग्भवे तु शिवाद्यं कामराजकम् ।
चन्द्राद्यं तु तृतीयं स्याद्विद्येयं मनुपूजिता ॥ ६ ॥
सहाद्यं वाग्भवं देवि चन्द्राद्यं शिवमध्यगम् ।
मादनं कामराजे तु शक्तिबीजं सहाननम्² ॥ ७ ॥
चन्द्राराधितविद्येयं भोगमोक्षफलप्रदा ।
हसाद्यं वाग्भवं विद्धि शिवाद्यं सहमध्यगम् ॥ ८ ॥
मादनं कामराजे तु तार्तीयं शृणु पार्वति ।
हसाद्यं शक्तिबीजं तु कुबेरेण प्रपूजिता ॥ ९ ॥
कामराजाख्यविद्यायास्तार्तीयं सुरवन्दिते ।
शक्तिबीजं सहाद्यं स्याद्विद्याऽगस्त्यप्रपूजिता ॥ १०
लोपामुद्रा प्रभावेन साक्षाद्ब्रह्मस्वरूपिणी ।
कामराजाख्यविद्याया वाग्भवे मादनं त्यज ॥ ११
चन्द्रं तत्रैव संयोज्य कामराजे ततः परम् ।
हित्वा चन्द्रं मुखे कुर्याद्विद्येयं नन्दिपूजिता ॥ १२ ।
कामराजाख्यविद्याया हित्वा भूमिं तृतीयके ।
शक्तिकण्ठे³ स्थितां देवि चन्द्राधः कुरु तत्र च ॥ १
इन्द्राराधितविद्येयं भुक्तिमुक्तिफलप्रदा ।
लोपामुद्राख्यविद्याया द्वितीयाया महेश्वरि ॥ १४ ॥
कामराजे भृगुं हित्वा तार्तीये⁴ शक्रगः शिवः ।
एषा विद्या वरारोहे त्रिपुरा सूर्यपूजिता ॥ १५ ॥

---

१ ख. पराम् । २ क. ग. 'जं हसान°' । ३ ख. '°त्रिकूटे हिर°' । ४ ख. '°ये सकगः शि

शृणु देवि प्रवक्ष्यामि चतुष्कूटां च शांकरीम् ।
लोपामुद्रां द्वितीयां तु विलिख्य सुरवन्दिते ॥ १६ ॥
पुनर्विलिख्यतामेव चतुर्थे पञ्चमे स्थिताम् ।
हित्वा तु भुवनेशानीमेकोच्चारेण चोच्चरेत् ॥ १७ ॥
चतुष्कूटा महाविद्या शंकरेण प्रपूजिता ।
लोपामुद्रां पुनर्देवि विलिख्य तदनन्तरम् ॥ १८ ॥
नन्दिकेश्वरविद्यां च षट्कूटा वैष्णवी भवेत् ।
दुर्वाससा पुरा देवी निष्करा[निष्कूटा] पूजिता परा॥१९॥
कामराजाख्यविद्यायास्त्रिकूटेषु वरानने ।
या स्थिता भुवनेशानि द्विधा कुरु महेश्वरि ॥ २० ॥
बिन्दुहीना नादहीना दुर्वासःपूजिता भवेत् ।
एतद्द्वादशसंख्याकैर्मन्त्रैस्तु सुरवन्दिते ॥ २१ ॥
द्वादशान्ता स्थिता देवि परब्रह्मस्वरूपिणी ।
राज्ञीयं सर्वविद्यानां सर्वाम्नायैस्तु सेविता ॥ २२ ॥
सर्वागममहामन्त्रवन्दिता देववन्दिता ।
सर्वयोगैर्नता नित्या केवलं ब्रह्मरूपिणी ॥ २३ ॥
एवं त्रिधा महाविद्या विद्या त्रिपुरसुन्दरी ।
इयमेव महादेवी त्रिकूटा परमेश्वरी ॥ २४ ॥
वक्तुं न शक्यते सर्वैर्ब्रह्मविष्ण्वादिभिः सदा ।
नो वाचा मनसा बुद्ध्या तुर्या वक्तुं न शक्यते ॥ २५ ॥
साक्षाद्ब्रह्ममयी देवी षोडशार्णस्वरूपिणी ।
मनसैव महेशानि स्मृत्वाऽहं तु सदाशिवः ॥ २६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुरसुन्दरी ( विद्याविवरणं नाम )
द्वादशः पटलः ॥ १२ ॥

---

अथ त्रयोदशः पटलः ।

---

श्रीदेव्युवाच—

परब्रह्मतया साक्षाच्छ्रीविद्या षोडशाक्षरी ।
कथय त्वं महादेव यद्यहं तव वल्लभा ॥ १ ॥

---

१ क. °वंविधा ।

त्रिकूटाः कथिताः सर्वाश्चतुष्कूटा च शांकरी ।
षट्कूटा वैष्णवी चैव मनवः कथिता विभो ॥ २ ॥
एतास्तु सकला विद्यास्त्रिविधास्तु श्रुता मया ।
इदानीं श्रोतुमिच्छामि श्रीविद्यां षोडशाक्षरीम् ॥ ३ ॥

ईश्वर उवाच—

शठत्वेन वरारोहे श्रीविद्यामन्त्रविद्बुधः ।
योगिनीनां भवेद्भक्ष्यः श्रीगुरोः शासनात्प्रिये ॥ ४ ॥
षोडशार्णां महाविद्यां न दद्यात्कस्यचित्प्रिये ।
राज्ञे राज्यप्रदायापि पुत्राय प्राणदाय वा ॥ ५ ॥
देयं तु सकलं भद्रे साम्राज्यमपि पार्वति ।
शिरोऽपि प्राणसहितं न देया षोडशाक्षरी ॥ ६ ॥
उच्चार्यमाणा ये मन्त्रास्ते सर्वे वाचिकाः प्रिये ।
उच्चाररहितं वस्तु श्रीविद्या षोडशाक्षरी ॥ ७ ॥
सवर्णाऽपि वरारोहे वस्तु साक्षान्निरक्षरम् ।
भृङ्गोपभुक्तपुष्पं तु शिवे योग्यं यथा भवेत् ॥ ८ ॥
तथा निरक्षरं वस्तु ह्यक्षरैरपि संयुतम् ।
उदके लिखितं यद्वन्मन्त्रोच्चारस्तथा भवेत् ॥ ९ ॥
भोगमोक्षप्रदा विद्या श्रीविद्या षोडशाक्षरी ।
विना गुरूपदेशेन शापो भवति निश्चयात् ॥ १० ॥
चन्द्रान्तं वारुणान्तं च शक्रादिसहितं पृथक् ।
वामाक्षि बिन्दुनादाढ्यं विश्वमातृकलात्मकम् ॥ ११ ॥
चतुर्विधप्रकारेण शृणु देवि प्रकथ्यते ।
त्वं मनोहारिणी यस्मात्कथ्यते भुवि दुर्लभम् ॥ १२ ॥
विद्यादौ योजयेद्देवि साक्षाज्जाग्रत्स्वरूपिणी ।
उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा ॥ १३ ॥
कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम् ।
जाग्रत्सत्त्वगुणा प्रोक्ता केवलं शक्तिरूपिणी ॥ १४ ॥
त्रिकूटा सकला भेदाः पञ्चकूटा भवन्ति हि ।
वैष्णवी वसुकूटा स्यात्षट्कूटा शांकरी भवेत् ॥ १५ ॥
द्वितीयोऽयं प्रकारः स्याद्दुर्लभो भुवनत्रये ।
एषैव शिवरूपा तु व्यापकत्वात्सुरेश्वरि ॥ १६ ॥

निश्चला सर्वभूतेषु सदाशिवमयी परा ।
सुषुप्तिरूपिणी साक्षाद्ब्रह्मरूपा यतः प्रिये ॥ १७ ॥
मरणं विस्मृतिर्मूर्छा निद्रा च तमसा वृता ।
सुषुप्तिस्तु कला ज्ञेया सुषुप्तिः शिवरूपिणी ॥ १८ ॥
केवलत्वेन जाग्रत्स्यात्पञ्चकूटा च शांभवी ।
सुषुप्त्यन्ते जागरादौ स्वप्नावस्था रजोमयी ॥ १९ ॥
अभिलाषो भ्रमश्चिन्ता विषयेषु पुनः स्मृतिः ।
कलाचतुष्टयं स्वप्नावस्थायां तु विधीयते ॥ २० ॥
शिवरूपा शक्तिरूपा महात्रिपुरदेवता ।
वेदादिमण्डिता देवि शिवशक्तिमयी सदा ॥ २१ ॥
तदा भेदास्तु सकलाः षट्कूटाः परमेश्वरि ।
वैष्णवी नवकूटा स्यात्सप्तकूटा च शांकरी ॥ २२ ॥
अस्याः स्मरणमात्रेण गजदानं शतं भवेत् ।
भेदत्रयं तु कथितं तुर्यां विद्यां शृणु प्रिये ॥ २३ ॥
यस्या विज्ञानमात्रेण ब्रह्म साक्षान्न संशयः ।
सुषुप्त्यादौ जागरान्ते स्फुरत्तामात्रलक्षणा ॥ २४ ॥
अवस्थाशेषतां प्राप्ता तुर्या तु परमा कला ।
भावाभावविनिर्मुक्ता गुणातीता निगद्यते ॥ २५ ॥
वैराग्यं च मुमुक्षुत्वं शमादि विमलं मनः ।
सदसद्वस्तुनिर्धारस्तुर्यायास्तु कला इमाः ॥ २६ ॥
आद्यबीजद्वयं भद्रे विपरीतक्रमेण हि ।
विलिख्य परमेशानि ततोऽन्यानि समुद्धरेत् ॥ २७ ॥
अन्तर्मुखा वरारोहे कुमारी त्रिपुरेश्वरी ।
एभिस्तु पञ्चसंख्याकैर्बीजैः संपुटितां यजेत् ॥ २८ ॥
षट्कूटां परमेशानि विद्येयं षोडशाक्षरी ।
त्रिकूटाः सकला भद्रे षोडशार्णा भवन्ति हि ॥ २९ ॥
वैष्णव्येकोनविंशार्णा शैवी सप्तदशाक्षरी ।
वक्त्रकोटिसहस्रैस्तु जिह्वाकोटिशतैरपि ॥ ३० ॥
वर्णितुं नैव शक्येयं श्रीविद्या षोडशाक्षरी ।
वैखरी वाच्यभावत्वादशक्ता गुणवर्णने ॥ ३१ ॥

---

१ क. °त्वं समाधिवि° ।

यतो निरक्षरं वस्तु परा तत्र तु कारणम् ।
मूकीभूता हि पश्यन्ति मध्यमा मध्यमा भवेत् ॥ ३२
ब्रह्मविद्यास्वरूपेण भुक्तिमुक्तिफलप्रदा ।
एकोच्चारेण देवेशि वाजपेयस्य कोटयः ॥ ३३ ॥
अश्वमेधसहस्राणि प्रादक्षिण्यं भुवस्तथा ।
काश्यादितीर्थयात्राश्च सार्धकोटित्रयान्विताः ॥ ३४
तुलां नार्हन्ति देवेशि नात्र कार्या विचारणा ।
एकोच्चारेण गिरिजे किं पुनर्ब्रह्म केवलम् ॥ ३५ ॥
षोडशार्णा महाविद्या न प्रकाश्या कदाचन ।
गोपितव्या त्वया भद्रे स्वयोनिरिव पार्वति ॥ ३६ ॥
शिवशक्तिसमायोगाद्यद्यत्कर्म प्रजायते ।
वेद्यं तत्र भवेत्तद्वच्छ्रीविद्यां षोडशाक्षरीम् ॥ ३७ ॥
विना गुरूपदेशेन श्रीविद्या षोडशाक्षरी ।
दृष्ट्वा प्रजपते यस्तु स भक्ष्यो योगिनीगणैः ॥ ३८ ॥
श्रीगुरोः कृपया लब्धा सर्वसाम्राज्यदायिनी ।
भुवनत्रयसौभाग्यं ददाति विपुलां श्रियम् ॥ ३९ ॥
साक्षान्मदनसौभाग्यं त्रैलोक्याकर्षणक्षमम् ।
सुधातरङ्गिणीक्षेमशब्दचातुर्यदायिनी ॥ ४० ॥
सौभाग्यभाग्यसंपन्नकलापटलदायिनी ।
परब्रह्मणि लीनत्वं ददाति यश उत्तमम् ॥ ४१ ॥
प्रपञ्चसागरे लीनानुद्धरेद्वेदमातृका ।
यस्याः सामर्थ्यतो देवि भुवनानि चतुर्दश ॥ ४२ ॥
अभूवन्परमेशानि तेषां कारणरूपिणी ।
चतुःसागरसामर्थ्यं कृपालोकनतो भवेत् ॥ ४३ ॥
ब्रह्माण्डकोटिजननी महामोक्षप्रदायिनी ।
निःसरन्ति महामन्त्रा विस्फुलिङ्गा यथा प्रिये ॥ ४४
वह्नेः सकाशाद्बहवो विद्यास्तु बहवस्तथा ।
वाग्भवात्तु समुत्पन्नास्तस्माद्वाग्भवमुच्यते ॥ ४५ ॥
मातृकार्णास्तथा भद्रे वाग्भवान्निसृताः क्रमात् ।
अत एव महेशानि शब्दब्रह्ममयी प्रिये ॥ ४६ ॥

---

१ ख. °स्वरूपाऽपि भु° । २ ख. °न्मदेन्द्रसौ° ।

पालयन्ती जगत्सर्वं तथा त्रैलोक्यमोहिनी ।
मोहयन्ती कामकला पुत्रपौत्रप्रवर्धिनी ॥ ४७ ॥
स्त्रीपुंभावेन सकलं ग्रथितं कामसूत्रके ।
तदा सौभाग्यसंपन्ना ब्रह्मस्थाननिवासिनी ॥ ४८ ॥
सौभाग्यगर्वगहना विश्वयोनिरितीरिता ।
चतुर्वाङ्मयनिष्ठयं त्रैलोक्यवशकारिणी ॥ ४९ ॥
साक्षात्संविन्मयी ज्ञानरूपिणी भोगदायिनी ।
महासंपत्प्रदा नित्या साक्षादक्षररूपिणी ॥ ५० ॥
षोडशार्णा मया भद्रे श्रीविद्या कथिता परा ।
निधानमिव चोरेभ्यो रक्षणीया तथा प्रिये ॥ ५१
न देया यस्य कस्यापि देया प्राणप्रदायिने ।
निर्मलाय स्वभक्ताय प्राणेभ्योऽप्यधिकाय च ॥ ५२ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे षोडशीविद्याविवरणं नाम त्रयोदशः पटलः ॥ १३ ॥

---

अथ चतुर्दशः पटलः ।

---

श्रीदेव्युवाच—

चक्रमण्डलमाख्यातं न पूजा तत्र मण्डले ।
कथिता परमेशान श्रोतुमिच्छामि तत्त्वतः ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि पूजाविधिमनुत्तमम् ।
तदङ्गकलशादीनां स्थापनं प्रथमं भवेत् ॥ २ ॥
तद्विधानं शृणु प्राज्ञे यथाविधि समासतः ।
मण्डलं वामतः कृत्वा जलेन चतुरस्रकम् ॥ ३ ॥
चहत्कराभ्यां देवेशि तत्राऽऽधारं मनोहरम् ।
सौवर्णरौप्यताम्रादिरचितं पूजयेत्प्रिये ॥ ४ ॥
वह्निमण्डलरूपं तु कलादशकमर्चयेत् ।
धूम्रा च नीलवर्णा च कपिला विस्फुलिङ्गिनी ॥ ५ ॥
ज्वाला हैमवती कव्यवाहिनी हव्यवाहिनी ।
रौद्री संकर्षिणी चैव वैश्वानरकला दश ॥ ६ ॥

---

१ ख. तदा । २ ख. °ग्यवर्ग° । ३ ख. °ला हेमावती ।

आभिः कलाभिः सहितं वह्निं तत्र प्रपूजयेत् ।
कलशं हेमजं वाऽन्यं स्थापयेत्तत्र सुन्दरि ॥ ७ ॥
पूजयेत्सूर्यरूपं तु कलाभिः परमेश्वरि ।
तपिनी तापिनी चैव विबुधा बोधिनी तथा ॥ ८ ॥
कलिनी शोषणी चैवं वारुण्याकर्षिणी तथा ।
माया विश्वावती हेमा प्रभा सौरकला इमाः ॥ ९ ॥
कलशं तु समापूर्य जलेन कमलेक्षणे ।
तत्रस्थममृतं साक्षाच्चन्द्ररूपं विचिन्तयेत् ॥ १० ॥
चन्द्रमण्डलमभ्यर्च्य कलाभिः सुरवन्दिते ।
अमृता मानसी तुष्टिः पुष्टिः प्रीती रतिस्तथा ॥ ११ ॥
श्रीश्च ह्रीश्च स्वधा रात्रिर्ज्योत्स्ना हैमवती तथा ।
छाया च पूर्णिमा नित्या अमावास्या च षोडशी ॥ १
एभिः समभ्यर्च्य मन्त्रैर्यजेदानन्दभैरवम् ।
शिवचन्द्रौ मातृकान्तं कालशक्राम्बुवह्नयः ॥ १३ ॥
वायुश्च वामकर्णेन योजितो बिन्दुलाञ्छितः ।
बीजमेतत्समुच्चार्य तथा चाऽऽनन्दभैरवम् ॥ १४ ॥
ङेन्तं शिखामन्त्रयुक्तं पुनर्बीजं तु संलिखेत् ।
चन्द्रं हित्वाऽऽदिमं कुर्यात्कर्णे वामाक्षि योजयेत् ॥ १५
सुरादेव्यै ततो वौषडियमानन्दभैरवी ।
अनेन चन्द्रं संपूज्य पूजार्हः कलशो भवेत् ॥ १६ ॥
विधाय वामभागे तु चतुरस्रं तु मण्डलम् ।
यन्त्रिकां तत्र संस्थाप्य शङ्खं तत्र विनिक्षिपेत् ॥ १७
शुद्धोदकेन संपूर्य पूजयेत्कारणान्वितम् ।
षडङ्गं तत्र संपूज्य सामान्यार्घ्यमिदं प्रिये ॥ १८ ॥
अथ वक्ष्ये महेशानि विशेषार्घ्यस्य लक्षणम् ।
आत्मश्रीचक्रयोर्मध्ये चतुरस्रं तु मण्डलम् ॥ १९ ॥
सामान्यार्घ्यस्य तोयेन देशिको भूमिजानुकः ।
वहत्करोर्ध्वपुटतो यन्त्रिकां तत्र योजयेत् ॥ २० ॥

---

१ ख. पं तं क° । २ ख. °व वरेण्या कर्षणी । ३ क. °र्य विशेषेण वरानने । त° । ४
°त्स्ना हेमाव° । ५ क. ग. शिवाम° । ६ ख. सुधा । ७ ख. °येत्तत्कलान्वि° ।

त्रिकोणवृत्तषट्कोणं चतुरस्रं तु मण्डलम् ।
वह्निं तत्र विचिन्त्याथ पूजयेद्यन्त्रिकामयम् ॥ २१ ॥
पूर्ववत्परमेशानि त्रिकूटां मध्यगां यजेत् ।
व्यस्तकूटैर्यजेत्तत्र त्रिकोणे परमेश्वरि ॥ २२ ॥
द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
सौवर्णं राजतं वाऽपि पात्रं संस्थापयेत्प्रिये ॥ २३ ॥
सूर्यरूपं प्रपूज्याथ यन्त्रं पूर्ववदालिखेत् ।
समस्तव्यस्तकूटैस्तु पूजयेत्पूर्ववत्क्रमात् ॥ २४ ॥
विशेषेणं समापूर्य चन्द्रं द्रवमयं प्रिये ।
पूर्ववद्यन्त्रमालिख्य त्रिकूटां यन्त्रमध्यगाम् ॥ २५ ॥
त्रिकोणं चिन्तयेत्तत्तु त्रिकूटैः पूजितं प्रिये ।
अकथादित्रिरेखाढ्यं हक्षाभ्यन्तरमुत्तमम् ॥ २६ ॥
द्विरावृत्त्या षडङ्गानि षट्कोणेषु प्रपूजयेत् ।
आत्मानं हंसमनुना आनन्देन च पूजयेत् ॥ २७ ॥
मूलविद्यां यजेत्तत्र षोडशार्णां जपेत्ततः ।
धूपदीपौ निवेद्याथ नमस्कृत्यार्घ्यकं बुधः ॥ २८ ॥
मुद्राः संदर्शयेत्तत्र साक्षाद्ब्रह्ममयं भवेत् ।
प्रोक्षयेत्तेन चाऽऽत्मानं पूजोपकरणानि च ॥ २९ ॥
सर्वत्र प्रोक्षणं कुर्यात्सर्वं ब्रह्ममयं भवेत् ।
आत्मानं तु समभ्यर्च्य भूतान्संत्रासयेत्ततः ॥ ३० ॥
मूलविद्यास्त्रमुच्चार्य दिग्बन्धं स्फोटनादिभिः ।
तन्मुखः संनतो देवि भूतशुद्धिं तु पूर्ववत् ॥ ३१ ॥
ततो न्यासादिकं कुर्यात्संनाहं तु शरीरके ।
करशुद्धिकरीं विद्यां मध्यमादितलान्तकम् ॥ ३२ ॥
अङ्गुलीषु द्विरावृत्त्या करशुद्धिरियं प्रिये ।
अत आत्मासनं दद्यात्ततश्चक्रासनं प्रिये ॥ ३३ ॥

---

१ ख. °णं यजेत्तत्र तु । २ क. ग. °कोणं प° । ३ ख. °पं पूर्वबुद्ध्या य° । ४ ख. पुस्तके जलेन च स° इति पाठान्तरम् । ५ ख. चन्द्रद्र° । ६ ख. पुस्तके °मये शुभे । पू° इति पाठान्तरम् । ७ ख. यजम° । ८ ख. °दिसुवर्णाढ्यं । ९ ख. °त्मानन्दं स° । १० क. ग. उन्मु° । ११ क. ग. °खः स ततो । १२ ख. अथ ।

सर्वमन्त्रासनं दद्यात्साध्यसिद्धासनं यजेत् ।
पादयोर्जङ्घयोर्जान्वोर्लिङ्गे न्यस्य चतुष्टयम् ॥ ३४
कुमार्यास्त्रिपुरेशान्याः षडङ्गानि च पूर्ववत् ।
अथ वक्ष्ये महेशानि श्रीविद्यान्यासमुत्तमम् ॥ ३५ ॥
संपूर्णां चिन्तयेद्विद्यां ब्रह्मरन्ध्रेऽरुणप्रभाम् ।
स्रवत्सुधां षोडशार्णां महासौभाग्यदां स्मरेत् ॥ ३६
वामांसदेशे सौभाग्यदण्डिनीं भ्रामयेत्ततः ।
रिपुजिह्वाग्रहां मुद्रां पादमूले न्यसेत्प्रिये ॥ ३७ ॥
त्रैलोक्यस्य त्वहं कर्ता ध्यात्वैवं तिलके न्यसेत् ।
संपूर्णामेव वदने वेष्टनत्वेन विन्यसेत् ॥ ३८ ॥
पुनः संपूर्णया देहे गलोर्ध्वे विन्यसेत्ततः ।
पुनः संपूर्णया देहे व्यापकत्वेन विन्यसेत् ॥ ३९ ॥
व्यापकान्ते योनिमुद्रां मुखे क्षिप्त्वाऽभिवन्द्य च ।
श्रीविद्यापूर्णरूपोऽयं न्यासः सौभाग्यवर्धनः ॥ ४० ॥
परिभ्राम्यानामिकां तु मूर्धानं परितः प्रिये ।
ब्रह्मरन्ध्रे क्षिपेद्देवि मणिबन्धे न्यसेत्ततः ॥ ४१ ॥
ललाटेऽनामिकां कुर्यात्षोडशार्णां स्मरन्बुधः ।
संमोहनाख्यो देवेशि न्यासोऽयं क्षोभकारकः ॥ ४२
त्रैलोक्यमरुणं ध्यायेच्छ्रीविद्यां मनसि स्मरेत् ।
पादयोर्जङ्घयोर्जान्वोः कट्योरन्धुनि पृष्ठके ॥ ४३ ॥
नाभौ पार्श्वद्वये चैव स्तनयोरंसयोस्तथा ।
कर्णयोर्ब्रह्मरन्ध्रे च वदनेऽक्षिणि पार्वति ॥ ४४ ॥
ततः कण्ठप्रदेशे[3] तु करवेष्टनयोः क्रमात् ।
संहारोऽयं महान्यासो बीजैः षोडशभिः क्रमात् ॥ ४५ ॥
श्रीविद्यायाः षोडशार्णैर्न्यासैर्विश्वेश्वरो भवेत् ।
सृष्ट्यन्तां विन्यसेद्देवि मातृकां पूर्ववत्प्रिये ॥ ४६ ॥
मातृकार्णस्वरूपां च वर्गाष्टकसमन्विताम् ।
वशिनीं मातृकां न्यस्येद्बीजाष्टकसमन्विताम् ॥ ४७ ॥

---

१ ख. °लोर्ध्वे न्यस्य साधकः । पु° । २ ख. °दने भुवि पा° । ३ क. ग. कर्णप्रदेशे
४ ख. °ष्टयर्थे वि° ।

अवर्गान्ते लिखेद्बीजं वह्निफान्तं क्षमान्वितम् ।
वामकर्णविशोभाढ्यं बिन्दुनादाङ्कितं प्रिये ॥ ४८ ॥
वशिनीं पूजयेद्वाचां देवतां देवि सुव्रते ।
कवर्गान्ते महेशानि कामेशीबीजमुत्तमम् ॥ ४९ ॥
मेरूद्धृतं समुच्चार्य वाग्देवीं पूजयेत्ततः ।
चवर्गान्ते धान्तलान्तं क्षमातुर्यस्वरान्वितम् ॥ ५० ॥
मोदिनीं पूजयेद्वाचां देवतां तदनन्तरम् ।
टवर्गान्ते वायुतोयं मुखसंस्थं महेश्वरि ॥ ५१ ॥
वामकर्णेन्दुबिन्द्वाढ्यं विमलां वागधीश्वरीम् ।
तवर्गान्ते जमक्ष्माद्यं वामनेत्रविभूषितम् ॥ ५२ ॥
बिन्दुनादाङ्कितं बीजं वाग्देवीमरुणां यजेत् ।
पवर्गान्ते व्योमचन्द्रं क्षमातोयाग्निमुख्यकम् ॥ ५३ ॥
ऊकारस्वरसंयुक्तं बिन्दुनादकलाङ्कितम् ।
जयिनीं पूजयेद्वाचां देवतां वीरवन्दिते ॥ ५४ ॥
यवर्गान्ते जान्तकालरेफवायुसमन्वितम् ।
ऊमाढ्यं देवतां वाचां सर्वेशीं परिपूजयेत् ॥ ५५ ॥
क्षमोवह्निगतं तुर्यं बीजेन परिमण्डितम् ।
बिन्दुनादकलाक्रान्तं कौलिनीं वाचमर्चयेत् ॥ ५६ ॥
शवर्गान्ते महेशानि न्यसेत्सर्वार्थसिद्धये ।
शिरोललाटभ्रूमध्यकण्ठहृन्नाभिगोचरे ॥ ५७ ॥
आधारे व्यूहकं यावन्न्यसेद्देवीः क्रमात्प्रिये ।
षोढा न्यासं ततः कुर्याद्येन ब्रह्माण्डरूपकः ॥ ५८ ॥
विराट्स्वरूपी वर्णात्मा शिवः साक्षान्न संशयः ।
गणेशः प्रथमो न्यासः सर्वविघ्नविनाशनः ॥ ५९ ॥
अरुणादित्यसंकाशान्गजवक्त्रांस्त्रिलोचनान् ।
पाशाङ्कुशवराभीतिकराञ्शक्तिसमन्वितान्[३] ॥ ६० ॥
ध्यात्वा प्रविन्यसेद्देवि मातृकान्यासवत्ततः ।
विघ्नेश्वरस्तथा श्रीश्च विघ्नराजस्तथा ह्रिया ॥ ६१ ॥
विनायकस्तथा तुष्टिः शान्तियुक्तः शिवोत्तमः ।
विघ्नकृत्पुष्टियुक्तस्तु विघ्नहृच्च सरस्वती ॥ ६२ ॥

---

१ ख. °न्तनीरक्ष° । २ क. °देवी क° ३ ख. °न् । एतांस्तु वि° ।

विघ्नराड्रतियुक्तस्तु मेधावान्गणनायकः ।
एकदन्तश्च कान्तिश्च द्विदन्तः कामिनीयुतः ॥ ६३ ॥
गजवक्त्रो मोहिनी च निरञ्जनजटा ततः ।
कपर्दी तु तथा तीव्रा दीर्घवक्त्रस्ततः प्रिये ॥ ६४ ॥
ज्वालिनीसहितः पश्चान्नन्दासंकर्षणौ ततः ।
वृषध्वजश्च शुभगा गणनाथेन संयुता ॥ ६५ ॥
कामरूपिणिका पश्चाद्गजेन्द्रः शुभ्रया युतः ।
शूर्पकर्णस्तु जयिनी त्रिनेत्रः सत्ययाऽन्वितः ॥ ६६ ॥
लम्बोदरश्च विघ्नेशी महानादस्वरूपिणी ।
चतुर्मूर्तिः कामदा च सदाशिवयुता ततः ॥ ६७ ॥
मदविह्वलनाम्नी च आमादविकटे ततः ।
दुर्मुखश्च तथा घूर्णा सुमुखो भूतिमांस्ततः ॥ ६८ ॥
प्रमोदश्च तथा भूमीरेकपादस्तथा सती ।
द्विजिह्वश्च रमायुक्तः शूरश्चैव तु मानुषी ॥ ६९ ॥
वीरेण सहिता पश्चाच्छैलजे मकरध्वजः ।
षण्मुखश्च विकर्णा च वरदो भृकुटी तथा ॥ ७० ॥
वामदेवस्तथा लज्जा वक्रतुण्डस्ततः परम् ।
दीर्घघोणान्वितः पश्चाद्विरण्डकधनुर्धरा ॥ ७१ ॥
सेनानीर्यामिनीयुक्तो ग्रामणी रात्रिसंयुतः ।
मत्तश्च चण्डिकायुक्तो विमत्तश्च शशिप्रभा ॥ ७२ ॥
मत्तवाहनलोले च जटी च चपलेक्षणा ।
मुण्डि ऋज्वीयुतः पश्चात्खड्गी दुर्भगयाऽन्वितः ॥ ७३ ॥
वरेण्यश्चैव सुभगा वृषकेतुस्तथा शिवा ।
भक्ष्यप्रियश्च दुर्गा च मेघनादश्च कालिका ॥ ७४ ॥
गणेशः कालकुब्जा च गणपो विघ्नहारिणी ।
मातृवर्णैर्न्यसेद्देवि ग्रहन्यासं ततो न्यसेत् ॥ ७५ ॥
पद्मरागं सितं रक्तं श्यामं पीतं च पाण्डुरम् ।
धूम्रकृष्णं कृष्णधूम्रं धूम्रधूम्रं विचिन्तयेत् ॥ ७६ ॥

---

१ क. ग. °धा च गण°। २ ख. °नीगतिः। ३ ख. °जटे त°। ४ ख. °सुरसा। ५ ख. पुस्तके सूर्यकोटिस्तु इति पाठान्तरम्। ६ क. ग. °ध्वजा। ष°। ७ ख. °कुटीयुता। वा°। ८ ख. °धरे। ते°। ९ ख. मुण्डी ह्रदीयु°। १० क. ग. °न्यासस्ततो भवेत्। ११ ख. रक्तं श्वेतं त°।

रविमुख्यान्कामरूपान्सर्वाभरणभूषितान् ।
वामोरुन्यस्तहस्तांश्च दक्षहस्ताभयप्रदान् ॥ ७७ ॥
स्वरैरर्कं हृदि न्यस्य[1] यवर्गेण शशी ततः ।
भ्रूमध्येऽथ कवर्गेण भौमं नेत्रत्रये न्यसेत् ॥ ७८ ॥
चवर्गेण बुधो हृत्स्थष्टवर्गेण बृहस्पतिः ।
हृदयोपरि देवेशि तवर्गेण गले भृगुः ॥ ७९ ॥
पवर्गेण शनिर्नाभौ राहुर्वक्त्रे शवर्गतः[2] ।
लक्षाभ्यां तु गुदे केतुर्न्यसेदेवं वरानने ॥ ८० ॥
अथ नक्षत्रवृन्दस्य न्यासं कुर्यात्सुखप्रदम्[3] ।
ज्वलत्कालाग्निसंकाशाः सर्वाभरणभूषिताः ॥ ८१ ॥
नतिपाण्योऽश्विनीमुख्या वरदाभयपाणयः ।
युग्मंयुग्मं तथा युग्मं युग्मयुग्मेन रोहिणीम्[4] ॥ ८२ ॥
एकमेकं तथा द्वन्द्वमेकं पुष्पान्तमुच्यते ।
ललाटे चक्षुषोः पश्चाद्वामदक्षिणकर्णयोः[5] ॥ ८३ ॥
नासाद्वये[6] च देवेशि तथा कण्ठे क्रमान्न्यसेत् ।
पुष्पान्तं च प्रविन्यस्य खगाणाभ्यां तु सार्पकम् ॥ ८४ ॥
दक्षस्कन्धे घङाभ्यां तु मघां स्कन्धे द्वितीयके ।
चपूर्वाफाल्गुनीं दक्षे कूर्परे छजसंयुताम् ॥ ८५ ॥
उत्तराफाल्गुनीं वामे कूर्परे विन्यसेत्प्रिये ।
झञवर्णास्थितो हस्तो मणिबन्धेऽथ दक्षिणे ॥ ८६
चित्रां टठस्थां वामे च मणिबन्धे न्यसेत्प्रिये ।
डकारेण युतां स्वातीं दक्षहस्ते प्रविन्यसेत् ॥ ८७ ॥
ढणयुक्तां विशाखां तु वामहस्ते प्रविन्यसेत् ।
तथदस्थानुराधां तु नाभौ विन्यस्य पार्वति ॥ ८८ ॥
धकारेण युतां ज्येष्ठां न्यसेद्दक्षकटौ प्रिये ।
नपफस्थं तथा मूलं न्यसेद्वामकटौ प्रिये ॥ ८९ ॥
पूर्वाषाढां बकारेण दक्षोरौ विन्यसेत्प्रिये ।
भकारेणोत्तराषाढां वामोरौ तदनन्तरम् ॥ ९० ॥

---

१ क. ग. °स्य थव° । २ क. ग. °तः । पक्षा° । ३ ख. °र्यात्सलक्षणम् । ४ ख. °णी ए । ५ ख. ° षो: अंसद्व° । ६ ख. °ये वामकण्ठे दक्षकण्ठे क्र° ।

मकारयुक्तं श्रवणं दक्षजानुनि विन्यसेत् ।
यरस्थितां धनिष्ठां तु वामजानुनि विन्यसेत् ॥ ९१ ॥
लकारेण ततो देवि शतभिषं न्यसेत्प्रिये ।
दक्षजङ्घागतां पश्चात्पूर्वाभाद्रपदां ततः ॥ ९२ ॥
बशवर्णस्थितां न्यस्य वामजङ्घागतां क्रमात् ।
षसहस्थोत्तराभाद्रपदां दक्षिणपादके ॥ ९३ ॥
क्षकारेण ततो बिन्दुविसर्गाभ्यां च रेवती ।
वामपादे प्रविन्यस्य योगिनीन्यासमाचरेत् ॥ ९४ ॥
सितासितारुणा बभ्रुचित्रापीताश्च चिन्तयेत् ।
चतुर्भुजाः समैर्वक्त्रैः सर्वाभरणभूषिताः ॥ ९५ ॥
डांडींबीजद्वयं चोक्त्वा डमला वरयाः प्रिये ।
वामकर्णेन्दुनादाढ्यं डाकिन्यै नम इत्यपि ॥ ९६ ॥
स्वरान्ते तु प्रवक्तव्यं मान्ते रक्षपदद्वयम् ।
त्वगात्मने कण्ठदेशे विशुद्धौ विन्यसेत्प्रिये ॥ ९७ ॥
कण्ठवर्णै राकिनीं तु रकाराद्यक्षरैः क्रमात् ।
पूर्ववद्बीजसंयुक्तैरसृगात्मोऽत्र संवदेत् ॥ ९८ ॥
अनाहते न्यसेत्पश्चाडुकारादिफकारकैः ।
लाकिनी च तथा देवि मांसात्मा मणिपूरके ॥ ९९ ॥
बंलंवर्णैः काकिनीं तु स्वाधिष्ठाने तथाविधाम् ।
मेदस्वरूपां विन्यस्य वसवर्णैस्तु साकिनीम् ॥ १०० ॥
अस्थिरूपां च पूर्वोक्तबीजेनाऽऽधारके न्यसेत् ।
हक्षवर्णास्थितां तद्वन्मज्जारूपिणिकां यजेत् ॥ १०१ ॥
भ्रुवोर्मध्ये महेशानि हाकिनीं द्विदले *न्यसेत् ।
×पूर्ववद्बीजसंयुक्तां तद्वच्छुक्रात्मिकां यजेत् ॥ १०२ ॥
सर्वधातुगतां देवीं शुक्लवर्णां तु याकिनीम् ।
ब्रह्मरन्ध्रे महेशानि न्यासोऽयं योगिनीयुतः ॥ १०३ ॥

---

* ख. पुस्तके न्यसेदित्यस्याग्रे ' हंसः शब्देन देवेशि तद्वद्याकिनिकां न्यसेत् ' इत्यर्धं
× इदमर्धं पूर्वार्धंश्चोत्तरश्लोकस्य ख. पुस्तके नास्ति ।

---

१ ख. भिविन्य° । २ ख. °युक्तोऽसृ° । ३ ख. °रमा तत्र° । ४ ख. बीजैर्मूले प्रां

राशिन्यासं ततः कुर्यात्सर्वरक्षाकरं सदा ।
रक्तश्वेतहरिद्वर्णपाण्डुचित्राशितान्स्मरेत् ॥ १०४ ॥
पिशङ्गपिङ्गलौ बभ्रुकर्बुरौसितधूम्रकान् ।
अकारादिचतुष्केण विन्यसेत्सुरवन्दिते ॥ १०५ ॥
मेषं दक्षिणपद्गुल्फे ततो द्वंद्वेन वै वृषम् ।
न्यसेज्जानुनि वेदैस्तु मिथुनं वृषणे ततः ॥ १०६ ॥
द्वाभ्यां कर्कटकं कुक्षौ द्वाभ्यां स्कन्धे च सिंहकम् ।
अनुस्वारविसर्गाभ्यां शवर्गेण च कन्यकाम् ॥ १०७ ॥
दक्षिणे तु शिरोभागे विन्यसेद्वीरवन्दिते ।
तथा वामशिरोभागे कवर्गेण तुलाभृतम् ॥ १०८ ॥
चवर्गेण तथा स्कन्धे वृश्चिकं विन्यसेत्प्रिये ।
टवर्गेण तथा कुक्षौ धन्विनं विन्यसेत्प्रिये ॥ १०९ ॥
मकरं तु तवर्गेण वृषणे विन्यसेत्क्रमात् ।
पवर्गेण तथा कुम्भं वामजानुनि विन्यसेत् ॥ ११० ॥
यवर्गेण क्षकारेण मीनं गुल्फेऽथ वामके ।
अथ पीठानि विन्यस्येत्सर्वतीर्थमयानि हि ॥ १११ ॥
सितासितारुणाश्यामाहरित्पीतान्यनुक्रमात् ।
पुनः पुनः क्रमाद्देवि पञ्चाशत्पीठसंचयः ॥ ११२ ॥
पीठानि संस्मरेद्विद्वान्सर्वमातृकया युतान्(?) ।
मातृकार्णैर्न्यसेद्विद्वान्सर्वकामार्थसिद्धये ॥ ११३ ॥
कामरूपं महापीठं पीठं वाराणसीं ततः ।
नेपालं च तथा पीठं तथा वै पौण्ड्रवर्धनम् ॥ ११४ ॥
पुरस्थिरं तथा पीठं चन्द्रास्थिरमतः परम् ।
पूर्णशैलं महापीठमर्बुदं च ततः परम् ॥ ११५ ॥
आम्रातकेश्वरं पीठमेकाम्रं च ततः परम् ।
त्रिस्रोतःपीठमनघं कामकोटं ततः परम् ॥ ११६ ॥
कैलासभृगुकेदारं पीठं चन्द्रपुरं ततः ।
श्रीपीठं च तथोंकारं जालंधरमतः परम् ॥ ११७ ॥
मालवं च ततः पीठं कुलान्तं देवकोटकम् ।
गोकर्णं च महापीठं मारुतेश्वरमेव च ॥ ११८ ॥

---

१ ख. राशित° । २ ख. °स्थितं त° । ३ ख. चरस्थितम° । ४ ख. °टम् ।

अट्टहासं च विरजं राजगेहं महापथम् ।
पीठं कोल्लगिरिं प्रोक्तमेलापुरमतः परम् ॥ ११९ ॥
कामेश्वरं महापीठं महापीठं जयन्तिका ।
पीठमुज्जयनी चैव चरित्रं क्षीरकाभिधम् ॥ १२० ॥
हस्तिनापुरपीठं च उड्डीशं च प्रयागकम् ।
षष्ठीशं च तथा पीठं मायापुरजलेश्वरम् ॥ १२१ ॥
मलयं च महापीठं श्रीशैलं मेरुकं गिरिम् ।
महेन्द्रं वामनं चैव हिरण्यपुरमेव च ॥ १२२ ॥
महालक्ष्मीमयं पीठमुड्डीयानमतः परम् ।
छायाच्छत्रपुरं पीठं तथैव परमेश्वरि ॥ १२३ ॥
पञ्चाशत्पीठविन्यासं मातृकावन्न्यसेत्सदा ।
षोढा न्यासो महादेवि न्यस्त्वा साक्षात्स्वयं शिवः॥
अथ कामान्न्यसेद्देवि दाडिमीकुसुमप्रभान् ।
वामाङ्कशक्तिसहितान्पुष्पबाणेक्षुकार्मुकान् ॥ १२५
शक्तयः कुङ्कुमनिभाः सर्वाभरणभूषिताः ।
नीलोत्पलकरा ध्येयास्त्रैलोक्याकर्षणाक्षमाः ॥ १२६
न्यसेत्कामरतिं पश्चात्कामप्रीतिं सुरेश्वरि ।
कान्तश्च कामिनीयुक्तो भ्रान्तो वै मोहिनीयुतः ॥
कामाङ्गः कमले तद्वत्कामचारो विलासिनी ।
कर्णकल्पलते तद्वत्कोमलश्यामले तथा ॥ १२८ ॥
कामवर्धनसंयुक्ता विज्ञेया तु शुचिस्मिता ।
कामश्च विस्मितायुक्तो विशालाक्षीयुतो रमः ॥ १
रमणो लेलिहायुक्ता रतिनाथदिगम्बरे ।
रतिप्रियश्च वामा च रात्रिनाथश्च कुब्जिका ॥ १३
रमेण च युता कान्ता रमणः सत्यया युतः ।
निशाचरश्च कल्याणी नन्दनो भोगिनी तथा ॥ १३
नन्दकः कामदायुक्तो मदनश्च सुलोचना ।
सुलावण्यायुतो देवि तथा नन्दसुताभिधः ॥ १३२

---

१ ख. °यापीठं सुरेश्वरि । २ क. ग. °देव्या न्य° । ३ ख. कामधुक्म° । ४ ख
५ ख. नन्देशः कामिनीयु° । ६ क. ग. °न्दयिता° ।

निशाचरश्च मर्दिन्या रतिर्हंसस्ततः परम् ।
कलहः प्रियया युक्तः पुष्पधन्वा च काङ्क्षिणी ॥ १३३ ॥
महाधनुश्च सुमुखा ग्रामणीर्नलिनीयुतः ।
भीमश्च जटिनीयुक्तो भ्रामणः पालिनीयुतः ॥ १३४ ॥
भ्रमणः[1] शिखिनीयुक्तो शान्तमुग्धे ततः परम् ।
भ्रामणो रमया युक्तो भृगुर्भूमा ततः परम् ॥ १३५ ॥
भ्रान्तश्चामरलोला च भ्रमावहसुचञ्चले ।
मोहनो दीर्घजिह्वा च[2] मोचकश्च तथा सती ॥ १३६ ॥
तथा मुग्धश्च लोलाक्षी मोहमर्दनभृङ्गिणी ।
मोहकश्च चपेटा च मन्मथो नाथया युतः ॥ १३७ ॥
मातङ्गमालिनीयुग्मं[3] भृङ्गी च कलहंसिनी ।
गायकेन समायुक्ता तथा वै विश्वतोमुखी ॥ १३८ ॥
गर्जनन्दिकया[4] युक्तो गीतिश्च[5] तदनन्तरम् ।
नर्तकः सह रञ्जिन्या खेलः कान्तिसमन्वितः ॥ १३९ ॥
उन्मत्तः कलकण्ठे च मत्तकश्च वृकोदरी ।
मेघः श्यामान्वितो देवी विमलश्रीः क्रमात्प्रिये ॥ १४० ॥
मातृकार्णैर्न्यसेद्देवी(वि) मातृकावत्सदाऽनघे ।
अनेन न्यासयोगेन त्रैलोक्यक्षोभको भवेत् ॥ १४१ ॥
बालायास्त्रिपुरेशान्या नवयोन्यङ्कितं न्यसेत् ।
श्रोत्रयोश्चुबुके चैव शङ्खास्येषु दृशोर्नसि ॥ १४२ ॥
अंसद्वये च हृदये न्यसेत्कूर्परकुक्षिषु ।
जान्वन्धुपादगुह्येषु[6] पार्श्वहृत्सु स्तनद्वये ॥ १४३ ॥
कण्ठे च नवयोन्याख्यं न्यसेद्बीजत्रयात्मकम् ।
पुनर्बालां समुच्चार्य षोडशार्णां[7] प्रविन्यसेत् ॥ १४४ ॥
पुनर्बालां समुच्चार्य चतुरस्रं च चिन्तयेत् ।
गोलकं न्यासयोगेन श्रीचक्रं परिचिन्तयेत् ॥ १४५ ॥
षट्चक्रेषु ललाटे च सीमन्ते च शिरोबिले ।
नव स्थानानि संकल्प्य न्यसेद्देवि ततः परम् ॥ १४६ ॥

---

१ ख. °णः शङ्खिनी° । २ ख. च कपर्दश्च तथा मतिः । ३ क. °युक्तं भृङ्गिणीकश्च हं° । ४ क. जगदानन्दिकायु° । ५ क. गीतश्च । ६ ख पुस्तके °न्वण्डपा° इति । पाठान्तरम् । ७ ख. °शार्ं प्र° ।

श्रीविद्यां ब्रह्मरन्ध्रे च पृष्ठतो गुरवः क्रमात् ।
तिथिनित्यास्ततो देवि मातृकास्वरसंयुताः ॥ १४
मातृकावन्न्यसेद्वक्त्रे सर्वसौभाग्यदायकाः ॥ १४८

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यान्यासविधानं नाम चतुर्दशः पटलः ॥

---

अथ पञ्चदशः पटलः ।

---

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि नित्यामण्डलमुत्तमम् ।
कामेश्वरी महाविद्या सर्वलोकवशंकरी ॥ १ ॥
बालां तारं च हृत्प्रान्ते कामेश्वरिपदं लिखेत् ।
इच्छाकामफलप्रान्ते प्रदेसर्वपदं लिखेत् ॥ २ ॥
ततः सत्त्ववशं ब्रूयात्करिसर्वजगत्पदम् ।
क्षोभणान्ते कारि ब्रूयाद्धुंकारत्रितयं लिखेत् ॥ ३
पञ्च बाणान्समालिख्य संहारेण कुमारिकाम् ।
एषा कामेश्वरी नित्या प्रसङ्गात्कथिताऽद्रिजे ॥ ४
वाग्भवं भगशब्दान्ते भुगे भगिनि चाऽऽलिखेत् ।
भगोदरि भगान्ते च भगमाले भगावहे ॥ ५ ॥
भगगुह्ये भगप्रान्ते योनिप्रान्ते भगान्तिके ।
निपातिनि च सर्वान्ते ततो भगवशंकरि ॥ ६ ॥
भगरूपे ततो लेख्यं नीरजायतलोचने ।
नित्यक्लिन्ने भगप्रान्ते स्वरूपे सर्व चाऽऽलिखेत् ॥
भगानि मे ह्यानयेति वरदेति समालिखेत् ।
रेते सुरेते भग च क्लिन्ने क्लिन्नद्रवे ततः ॥ ८ ॥
क्लेदय द्रावयाथो च सर्वसत्त्वान्भगेश्वरि ।
अमोघे भगविच्चे च क्षुभ क्षोभय सर्व च ॥ ९ ॥
सत्त्वान्भगेश्वरि ब्रूयाद्वाग्भवं ब्लूंजमादिमम् ।
भेंब्लूं मोंब्लूं च हेंब्लूं च हें क्लिन्ने च ततः परम् ॥
सर्वाणि च भगान्यन्ते मे वशं चाऽऽनयेति च ।
स्त्रीबीजं च हर प्रान्ते बले मात्मकमक्षरम् ॥ ११ ॥

---

१ क. ग. देवी मा° । २ ख. °दं वदेत् । ३ ख. च भगक्लिन्ने त° इति पाठान्तरा

प्रणवं पूर्वमुच्चार्य तथाऽङ्कुशयुगं लिखेत् ॥ १४ ॥
तन्मध्ये विलिखेद्देवि भरोमात्मकमक्षरम् ।
चवर्गमन्त्यहीनं तु विलिखेद्वह्निसंस्थितम् ॥ १५ ॥
चतुर्दशस्वरोपेतं बिन्दुनादाङ्कितं पृथक् ।
वह्निजायान्वितो मन्त्रो भेरुण्डायाः फलप्रदः ॥ १६ ॥
भुवनेशीं समुच्चार्य चतुर्थ्या वह्निवासिनीम् ।
हृदन्तोऽयं मनुर्देवि नित्येयं वह्निवासिनी ॥ १७ ॥
प्रणवं भुवनेशानि फरेमात्मकमक्षरम् ।
सविसर्गः शशी पश्चान्नित्यक्लिन्ने मदद्रवे ॥ १८ ॥
वह्निजायान्विता विद्या सर्वैश्वर्यप्रदायिनी ।
महाविद्येश्वरी नित्या प्रसङ्गेन मयेरिता ॥ १९ ॥
पराबीजं समुच्चार्य शिवदूतीं च ङेयुताम् ।
हृदन्तोऽयं मनुर्देवि दूतीयं सर्वकामदा ॥ २० ॥
ओंकारबीजमुच्चार्य परां कवचमालिखेत् ।
खे च छे क्षः समालिख्य स्त्रीबीजं च समालिखेत् ॥ २१ ॥
हुंकारं क्षे परा चास्त्रं विद्येयं द्वादशाक्षरी ।
त्वरिता नाम नित्येयं त्रिषु लोकेषु दुर्लभा ॥ २२ ॥
सर्वासिंहासनमयी बालेव कुलसुन्दरी ।
बालया पुटितां कुर्यात्तथा वै नित्यभैरवी ॥ २३ ॥
पञ्च बाणाश्च देवेशी नित्या शक्राक्षरी भवेत् ।
त्रैलोक्यविमला विद्या नित्याख्या परमेश्वरी ॥ २४ ॥
पञ्चाक्षरी बाणबीजैर्नित्येयमपरा प्रिये ।
प्रणवं भुवनेशानि फरेमात्मकमक्षरम् ॥ २५ ॥
ख्रूमात्मकं द्वितीयं च भुवनेश्यङ्कुशं ततः ।

---

१ ख. °वा विद्या सर्वलोकवशंकरी । २ क. ग. °न्वितो वि° ।

नित्यशब्दं समुद्धृत्य संबुद्ध्या तु मद्द्रवाम् ॥ २६

कवचं चाङ्कुशं पञ्चदशैर्नीलपताकिनी ।
वान्तं कालसमायुक्तं वह्निवायुगतं ततः ॥ २७ ॥
पृथक्पञ्चसमायुक्तं ततः शक्रस्वरान्वितम् ।
बिन्दुनादाङ्कितं बीजं नित्येयं विजया प्रिये ॥ २८ ॥
चन्द्रवारुणसंयुक्तं तारबीजं समालिखेत् ।
चतुर्थ्या तु ततो देवि विलिखेत्सर्वमङ्गलाम् ॥ २९ ॥
हृदन्तोऽयं मनुर्देवि नित्येयं सर्वमङ्गला ।
तारं हृद्भगवत्यन्ते ज्वालामालिनि देवि च ॥ ३० ॥
द्विरुच्चार्य च सर्वान्ते भूतसंहारकारिके ।
जातवेदसि संलिख्य ज्वलन्तिपदयुग्मकम् ॥ ३१ ॥
ज्वलेतिप्रज्वलद्वंद्वं हुंकारद्वितयं लिखेत् ।
वह्निबीजत्रयं हुं च अस्त्रस्वाहान्वितो मनुः ॥ ३२ ॥
इयं नित्या महादेवि ज्वालामालिनिका परा ।
कवर्गान्तं स्वरान्तं च शक्रस्वरविभूषितम् ॥ ३३ ॥
बिन्दुनादकलाक्रान्तं विचित्रा परमेश्वरी ।
अकारादिषु सर्वेषु स्वरेषु क्रमतो न्यसेत् ॥ ३४ ॥
अःस्वरे परमेशानि श्रीविद्यां विश्वमातृकाम् ।
स्वरवद्विन्यसेन्नित्या नीरजायतलोचने ॥ ३५ ॥
प्रकटाद्या न्यसेत्पश्चादाधारादिषु मन्त्रवित् ।
स्थितिन्यासं ततः कुर्याच्छ्रीविद्याषोडशाक्षरैः ॥ ३६ ॥
पञ्चाङ्गुलीषु करयोर्ब्रह्मरन्ध्रे मुखे हृदि ।
त्रयं विन्यस्य नाभ्यादिपादान्ते चैकमद्रिजे ॥ ३७ ॥
गलादिनाभिपर्यन्तमपरं हि ततः परम् ।
ब्रह्मरन्ध्रादिकंठान्तमेकं विन्यस्य पादयोः ॥ ३८ ॥
अङ्गुलीषु च विन्यस्य न्यासोऽयं स्थितिकारकः ।
सृष्टिन्यासं ततः कुर्यात्सर्वसिद्धिप्रदायकम् ॥ ३९ ॥
ब्रह्मरन्ध्रेऽलिके नेत्रश्रुतिघ्राणोष्ठकेषु च ।
दन्तान्तरोर्ध्वके देवि जिह्वायां गलकूपके ॥ ४० ॥

---

१ ख. °शं विद्या देवि नी° । २ ख. °ह्निबीजगतं त° । ३ क. च । देव्युच्चा° । रत्रित° इति पाठान्तरम् ।

पृष्ठे सर्वाङ्गहृदयस्तनकुक्षिषु लिङ्गके ।
श्रीविद्यार्णैर्न्यसेद्देवि मन्त्रं सर्वसमृद्धये ॥ ४१ ॥
सर्वाङ्गे विन्यसेत्पश्चाद्व्यापकत्वेन सुन्दरि ।
प्राणानायम्य विधिवन्मुद्रासंनद्धविग्रहः ॥ ४२ ॥
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ।
खेचरी बीजरूपा च योनिमुद्रेत्यनुक्रमात् ॥ ४३ ॥
बीजानि वक्ष्ये क्रमतो मुद्राणां परमेश्वरि ।
पञ्चबाणैः पञ्च मुद्राः करोमात्मकमक्षरम् ॥ ४४ ॥
आद्यं तु रुद्रभैरव्या बीजं सादाशिवं ततः ।
ततस्तु वाग्भवं देवि क्रमेण हि चतुष्टयम् ॥ ४५ ॥
चतुर्मुद्रासु बीजानि नवमुद्रास्वनुक्रमात् ।
अथ वक्ष्ये महेशानि मुद्राविवरणं क्रमात् ॥ ४६ ॥
वामहस्तेन मुष्टिं तु बद्ध्वा कर्णप्रदेशके ।
तर्जनीं सरलां कृत्वा भ्रामयेत्तन्त्रवित्तमः ॥ ४७ ॥
सौभाग्यदण्डिनी मुद्रा न्यासकाले तु सूचिता ।
अन्तरङ्गुष्ठमुष्ट्या तु निरुध्य जगतीमिमाम् ॥ ४८ ॥
रिपुजिह्वाग्रहा मुद्रा न्यासकाले तु सूचिता ।
पाणिद्वयं महेशानि परिवर्तनयोगतः ॥ ४९ ॥
योजयित्वा तर्जनीभ्यामनामे धारयेत्प्रिये ।
मध्यमे योजयेन्मध्ये कनिष्ठे तदधस्तथा ॥ ५० ॥
अङ्गुष्ठावपि संयोज्य त्रिधा युग्मक्रमेण तु ।
त्रिखण्डा नाम मुद्रेयं त्रिपुराह्वानकर्मणि ॥ ५१ ॥
विरलौ तु करौ कृत्वा मध्यमे मध्यगे कुरु ।
अङ्गुष्ठाभ्यां कनिष्ठे च संपीड्य सरले ततः ॥ ५२ ॥
तर्जन्यौ दण्डवत्कुर्यान्मध्यमस्थे ह्यनामिके ।
सर्वसंक्षोभिणी मुद्रा त्रैलोक्यक्षोभकारिणी ॥ ५३ ॥
मध्यमे तर्जनीयुक्ते सरले स्यात्तदा भवेत् ।
सर्वविद्राविणी मुद्रा द्रावयेत्सचराचरम् ॥ ५४ ॥

---

१ ख. मन्त्री स° । २ ख. °तः । केवलं वा° । ३ ख. निबध्नजग° । ४ ख. °ङ्गुष्ठौ च कनिष्ठाभ्यां सं° इति पाठान्तरम् ।

मध्यमे तर्जनीयुग्मे वक्रे कुर्यात्सुलोचने ।
एतस्या एव मुद्रायास्तदा कर्षणकारिणी ॥ ५५ ॥
विपरीतौ तलौ कृत्वा चाङ्गुली हृन्मुखा यजेत् ।
परिवर्तनमार्गेण[1] क्रमेण निबिडास्ततः ॥ ५६ ॥
अङ्गुष्ठाग्रप्रदेशे तु तर्जन्यावङ्कुशाकृती ।
सर्वा एकत्र संयोज्य[2] सर्ववश्यकरी भवेत् ॥ ५७ ॥
पुटाञ्जलिकरौ कृत्वा मध्यमागर्भसंस्थिते ।
परस्परकनिष्ठे तु तर्जन्यग्रगते ततः ॥ ५८ ॥
अनामिके तु सरले मध्यमामुखदेशगौ[3] ।
अङ्गुष्ठौ परमेशानि सर्वोन्मादनकारिणी ॥ ५९ ॥
एतस्या एव मुद्राया अनामातर्जनीक्रमात् ।
अङ्कुशाकाररूपा तु मुद्रेयं तु महाङ्कुशा ॥ ६० ॥
वामं भुजं दक्षभुजे दक्षिणं वामदेशतः ।
निवेश्य योजयेत्पश्चात्परिवर्त्य[4] क्रमेण हि ॥ ६१ ॥
कनिष्ठानामिकायुग्मे तर्जनीभ्यां निरोधयेत् ।
मध्यमे सरले कृत्वा योनिवत्सरलौ ततः ॥ ६२ ॥
अङ्गुष्ठौ खेचरी मुद्रा पार्थिवस्थानयोजिनी ।
प्रियेयं सर्वदेवानां खेचरत्वप्रदायिनी ॥ ६३ ॥
परिवर्त्याञ्जलिं कृत्वा कनिष्ठाग्रगते ततः ।
मध्यमे स्थापयेद्देवि कनिष्ठे धारयेत्ततः ॥ ६४ ॥
अनामिकाभ्यां सुदृढं तर्जनीमध्यमायुगम् ।
अङ्गुष्ठाभ्यां समायोज्यमर्धचन्द्राकृतिं प्रिये ॥ ६५ ॥
बीजमुद्रेयमाख्याता सर्वानन्दकरी प्रिये ।
परिवर्त्य करौ सम्यक्तर्जनीवामने समे ॥ ६६ ॥
मध्यमे कुरु तन्मध्ये योजयेत्तदनन्तरम् ।
अन्योन्यानामिके देवि कनिष्ठे तु यथास्थिते ॥ ६७ ॥
अङ्गुष्ठाभ्यां योजिताभ्यां योन्याकारं तु कारयेत् ।

१ ख. °मात्रेण । २ ख. °योज्याः स° । ३ ख. °मानखदेशिकौ । अ° । ४ क. त्याक्र° । ५ ख. योज्ये । ६ क. ग. °जिता । प्रि° । ७ ख. °युतम् । अ° । ८ ख. °तिं यजे ९ क. ग. ° वाहने ।

योनिमुद्रेयमाख्याता परा त्रैलोक्यमातृका ॥ ६८ ॥
एवं विन्यस्तदेहः सन्मुद्रासंनद्धविग्रहः ।
अन्तर्यागविधिं कुर्याद्येन साक्षात्स्वयं विभुः ॥ ६९ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यान्यासविवरणं नाम पञ्चदशः पटलः ॥ १५ ॥

---

अथ षोडशः पटलः ।

---

श्रीदेव्युवाच—

अन्तर्यागविधिं देव बहिर्यागविधिं तथा ।
सकलं कथयेशान यद्यहं तव वल्लभा ॥ १ ॥

ईश्वर उवाच—

शृणु देवि प्रवक्ष्यामि यजनं चाऽऽन्तरं महत् ।
मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ॥ २ ॥
उद्यत्सूर्यप्रभाजालविद्युत्कोटिप्रभामयी ।
चन्द्रकोटिप्रभाद्रावां त्रैलोक्यैकप्रभामयीम् ॥ ३ ॥
अशेषजगदुत्पत्तिस्थितिसंहारकारिणीम् ।
ध्यायेन्मनो यथा देवीं निश्चलं जायते तथा ॥ ४ ॥
सहजानन्दसंदोहमन्दिरं भवति क्षणात् ।
मनो निश्चलतां प्राप्तं शिवशक्तिप्रभावतः ॥ ५ ॥
समाधिर्जायते तत्र संज्ञाद्वयविजृम्भितः ।
स्वयंप्रज्ञातनामैको ह्यसंप्रज्ञातनामधृत् ॥ ६ ॥
स्वयंप्रज्ञातसंज्ञस्तु शक्त्याधिक्येन जायते ।
असंप्रज्ञातनामैको शिवाधिक्येन वै भवेत् ॥ ७ ॥
स्वयंप्रज्ञातभेदस्तु तीव्रस्तीव्रतरो भवेत् ।
असंप्रज्ञातभेदस्तु मन्दो मन्दतरस्तथा ॥ ८ ॥
( * संज्ञा प्रज्ञा न यत्रैवं स्वयंप्रज्ञोऽभिधीयते ।
असंप्रज्ञो हि भूयस्तु स्थितप्रज्ञः प्रतिष्ठितः ॥ ९ ॥

---

* धनुश्चिह्नान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति ।

---

१ ख. °धिं ब्रूहि ब° । २ ख. °कलाकार ईश° । ३ ख. °यसम् । ४ ख. °मयम् । ५ ख. °द्रावं त्रै° । ६ ख. °मयम् । ७ ख. °कारकम् । ८ ख. देवि । ९ क. ग. °तम् । स्व° । १० ख. नामा तु शिवतत्त्वेन वै° ।

प्रज्ञाप्रज्ञानमेवेदमसंस्मयमिति द्वयम् ।
संज्ञाद्वयमिदं देवि शिवतत्त्वेन वै भवेत् ॥ १० ॥ )
हास्यरोदनरोमाञ्चकम्पस्वेदादिलक्षणः ।
तीव्रस्तीव्रतरो देवि समाधिरुपलक्षितः ॥ ११ ॥
निमेषवर्जिते नेत्रे वपुस्तल्लक्षणं स्थिरम् ।
मन्दो मन्दतरो देवि समाधिः परिकीर्तितः ॥ १२ ॥
शांभवेन च वेधेन सुखी भूयान्निरन्तरम् ।
अन्तर्यागविधिं कृत्वा बहिर्यजनमाचरेत् ॥ १३ ॥
एवं विन्यस्तदेहः सन्सर्वात्मा साधकोत्तमः ।
ध्यायेन्निरामयं वस्तु जगत्त्रयविमोहिनीम् ॥ १४ ॥
अशेषव्यवहाराणां स्वामिनीं संविदं पराम् ।
उद्यत्सूर्यसहस्राभां दाडिमीकुसुमप्रभाम् ॥ १५ ॥
जपाकुसुमसंकाशां पद्मरागमणिप्रभाम् ।
स्फुरत्पद्मनिभां तप्तकाञ्चनाभां सुरेश्वरीम् ॥ १६ ॥
रक्तोत्पलदलाकारपादपल्लवराजिताम् ।
अनर्घ्यरत्नखचितमञ्जीरचरणद्वयाम् ॥ १७ ॥
पादाङ्गुलीयकाक्षिप्तरत्नतेजोविराजिताम् ।
कदलीललितस्तम्भसुकुमारोरुकोमलाम् ॥ १८ ॥
नितम्बबिम्बविलसद्रक्तवस्त्रपरिष्कृताम् ।
मेखलाबद्धमाणिक्यकिङ्किणीनादविभ्रमाम् ॥ १९ ॥
अलक्ष्यमध्यमां निम्ननाभिं शातोदरीं पराम् ।
रोमराजिलतोद्भूतमहाकुचफलान्विताम् ॥ २० ॥
सुवृत्तनिबिडोत्तुङ्गकुचमण्डलराजिताम् ।
अनर्घ्यमौक्तिकस्फारहारभारविराजिताम् ॥ २१ ॥
नवरत्नप्रभाराजद्ग्रैवेयकविभूषणाम् ।
श्रुतिभूषामनोरम्यकपोलस्थलमञ्जुलाम् ॥ २२ ॥
उद्यदादित्यसंकाशताटङ्कमुखप्रभाम् ।
पूर्णचन्द्रमुखीं पद्मवदनां वरनासिकाम् ॥ २३ ॥

---

१ ख. °दादिलक्षितः । ती° । २ ख. °लावक्रमा° । ३ ख. °लताभूत । ४ ख. °रीम् । ५ ख. °नां मीनलोचनाम् ।

स्फुरन्मदनकोदण्डसुभ्रुवं पद्मलोचनाम् ।
ललाटपट्टसंराजद्रत्नोढ्यतिलकाङ्किताम् ॥ २४ ॥
मुक्तामाणिक्यघटितमुकुटस्थलकिङ्किणीम् ।
स्फुरच्चन्द्रकलाराजन्मुकुटां च त्रिलोचनाम् ॥ २५ ॥
प्रवालवल्लीविलसद्बाहुवल्लीचतुष्टयाम् ।
इक्षुकोदण्डपुष्पेषुपाशाङ्कुशचतुर्भुजाम् ॥ २६ ॥
सर्वदेवमयीमम्बां सर्वसौभाग्यसुन्दरीम् ।
सर्वतीर्थमयीं दिव्यां सर्वकामप्रपूरिणीम् ॥ २७ ॥
*सर्वमन्त्रमयीं नित्यां सर्वागमविशारदाम् ।
सर्वक्षेत्रमयीं देवीं[1] सर्वविद्यामयीं शिवाम् ॥ २८ ॥
सर्वयागमयीं[2] विद्यां सर्वदेवस्वरूपिणीम्[3] ।
सर्वशास्त्रमयीं नित्यां सर्वागमनमस्कृताम् ॥ २९ ॥
सर्वाम्नायमयीं देवीं सर्वायतनसेविताम् ।
सर्वानन्दमयीं ज्ञानगह्वरां संविदं पराम् ॥ ३० ॥
एवं ध्यात्वा परामम्बां वहन्नासापुटं[4] क्रमात् ।
आवाह्य चक्रमध्ये तु मुद्रया हि त्रिखण्डया ॥ ३१ ॥
संस्थितां चिन्तयेत्तत्र श्रीपीठान्तर्निवासिनीम् ।
मुद्राः संदर्शयेद्देवि तर्पणैस्तु त्रिधा यजेत् ॥ ३२ ॥
लयाङ्गं कल्पयेद्देहे देव्यास्तु परमेश्वरि ।
गन्धपुष्पाक्षतादींश्च देव्यै सम्यङ्निवेदयेत् ॥ ३३ ॥
उपचारैः षोडशभिः संपूज्य परदेवताम् ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ ३४ ॥
एतस्मिन्समये देवि तिथिनित्यां प्रपूजयेत् ।
कामेश्वर्यादिका नित्या विचित्रान्ताः परेश्वरि ॥ ३५ ॥
प्रतिपत्पौर्णमास्यन्ततिथिरूपाः प्रपूजयेत् ।
विभाव्य च महात्र्यस्रे पूर्वदक्षोत्तरं क्रमात् ॥ ३६ ॥
रेखासु विलिखेत्तत्र पञ्चपञ्च क्रमेण हि ।

---

* इदमर्धं ख. पुस्तके नास्ति ।

---

१ क. ग. विद्यां । २ ख. °र्वयोग° ३ ख. °र्ववेदस्व° । ४ ख. °क्षासीपु° । ५ ख. °समम्द°।

अकाराद्या उवर्णान्ता दक्षिणस्यां विचिन्तयेत् ॥ ३७
ततश्च पूर्वरेखायामृकारादिकपञ्चकम् ।
विलिख्योत्तररेखायां शक्त्यादि विलिखेत्ततः ॥ ३८ ॥
अनुस्वारान्तमन्त्रस्तु विसर्गे षोडशीं यजेत् ।
वामावर्तेन देवेशि नित्याः षोडश कीर्तिताः ॥ ३९ ॥
प्रतिपत्तिथिमारभ्य पौर्णमास्यन्तमद्रिजे ।
एकैकां पूजयेन्नित्यां महासौभाग्यमाप्नुयात् ॥ ४० ॥
कृष्णपक्षे महेशानि पूजयेत्तिथिमण्डलम् ।
विचित्राद्या वरारोहे यावत्कामेश्वरी भवेत् ॥ ४१ ॥
पूजनीया विलोमेन भक्त्या तु परमेश्वरी ।
कलाः षोडश देवेशि यस्तु चन्द्रकलाः क्रमात् ॥ ४२
स सौभाग्यं महादेवि प्राप्नोति गुरुशासनात् ।
कामेश्वर्यादिका नित्याः पूजयित्वा क्रमात्ततः ॥ ४३ ।
तिथिनित्यां त्रिधा देवि पूजयेद्भाग्यहेतवे ।
पुनः श्रीत्रिपुरानित्यां यजेत्सौभाग्यहेतवे ॥ ४४ ॥
एतस्मिन्समये देवि गुरून्संपूजयेद्बुधः ।
पुष्पसंकोचयोगेन कथयामि तवानघे ॥ ४५ ॥
रश्मिवृन्दं दलमितं गुरवस्तु शताधिकाः ।
तस्मात्संकोचयेत्पुष्पममिताः सिद्धिहानिदाः ॥ ४६ ॥
नष्टसंततिविज्ञेया मिताः सर्वसमृद्धिदाः ।
पुष्पं संकोचयेन्नोचेद्द्वादशे नष्टसंततिः ॥ ४७ ॥
संतत्या नष्टरूपः सन्न भवेद्देवताप्रियः ।
अत एव मया सम्यक्पुष्पं संकुचितं प्रिये ॥ ४८ ॥
कामराजाख्यविद्याया गुरवस्तु समृद्धिदाः ।
मध्यप्राक्त्र्यश्रमध्ये हि गुरुपङ्क्तिं त्रिधाऽर्चयेत् ॥ ४९ ॥
पराख्यान्पूजयेदादौ परापरविभक्तिकान् ।
ततोऽपरांस्त्रिधा देवि गुरून्संपूजयेत्प्रिये ॥ ५० ॥
दिव्यौघे तु परान्विद्धि सप्तसंख्यान्वरानने ।

---

१ ख. °खायां दीर्घकर्णादिर° । २ क. ग. °क्त्यादीन्विलि° । ३ ख. °न्तमात्रास्तु । ४ °नित्यं म° । ५ ख. महद्देवि° ।

आनन्दनाथशब्दा+न्ता गुरवः पुरुषाः प्रिये ॥ ५१ ॥
स्त्रियः पराम्बाशब्दान्ता विज्ञेया वीरवन्दिते ।
परप्रकाशो देवेशि ततः परशिवो मतः ॥ ५२ ॥
परा शक्तिस्तथा देवि कौलेश्वर इति प्रिये ।
शुक्ला देवि कुलेशानकामेश्वर्यम्बिकाः क्रमात् ॥ ५३ ॥
मुनिसंख्यास्तु गुरवः पराख्या दिव्यरूपिणः ।
भोगक्लिन्नस्तु समयो[1] वेदाख्यः सहजस्तथा ॥ ५४ ॥
परापराख्यसिद्धौघे[2] मानवौघे शृणु प्रिये ।
गगनो विश्वविमलौ मदनो भुवनस्तथा ॥ ५५ ॥
लीला स्वात्मप्रिय[3]ः पश्चान्नागसंख्यास्तु मान[4]वाः ।
अपराः परमेशानि* नियता अक्षरा इमे ॥ ५६ ॥
एतत्त्रयं तु नियतं देशिकानां हिताय च ।
मयोद्धृतं महेशानि पुष्पं संकुचितं प्रिये ॥ ५७ ॥
मानवौघान्तिके पश्चात्स्वगुरुत्रितयं यजेत् ।
परमेष्ठी गुरुः पश्चाद्गुरुः परमसंज्ञितः ॥ ५८ ॥
स्वगुरुश्च महेशानि पूजयेत्तु गुरुत्रयम् ।
अथ वा मानवौघान्त एकं स्वगुरुमर्चयेत् ॥ ५९ ॥
अयं प्रकारः कथितः प्रकारान्तरमुच्यते ।
वन्द्यं सर्वप्रकाराणां मानवौघाष्टकादथ[6] ॥ ६० ॥
गुरवो नवसंख्याका इह यावद्भवन्ति हि ।
नवचक्रेश्वरी यस्मात्तावत्पुष्पं प्रकाशयेत् ॥ ६१ ॥
मानवौघे तदा देवि दशसप्त भवन्ति हि ।
पश्चात्संकोचयेत्पुष्पं नवमं श्रीगुरुं यजेत् ॥ ६२ ॥
अज्ञातगुरुशिष्याणां कथयामि वरानने ।
गुरुभ्यो नम उच्चार्य पादुकाभ्यो नमो लिखेत् ॥ ६३ ॥
गुर्वन्ते परमान्ते च[7] गुरुभ्यो नम इत्यपि ।

---

+ अत्रैतत्ख. पुस्तके पाठान्तरम्—°न्ता विज्ञेया वीरवन्दिते । अम्बान्ता गुरवः प्रोक्ताः स्त्रीलिङ्गाः परमेश्वरि । पर° । * ख. पुस्तके °नि पुष्पं संकुचितं प्रिये । ए° इति पाठान्तरम् ।

---

१ ख. °मयः सहजो वेदसंख्यकाः । २ ख. °द्धौघो मानवौघं शृ° । ३ क. °स्वात्मा प्रि° । ४ ख. °प्रियाः प° । ५ क. °नवः । अ° । ६ क. °कादिकम् । गु° । ७ ख. पुस्तके, च परमेष्ठ्यन्ते तथा । ए° इति पाठान्तरम् ।

एतेषां पादुकास्तद्वदाचार्येभ्यो नमो वदेत् ॥ ६४ ॥
आचार्यपादुकास्तद्वत्पूर्वसिद्धास्तु पादुकाः ।
सामान्यगुरुशिष्याणां गुरुपङ्क्तिरियं भवेत् ॥ ६५ ॥
गुरुपङ्क्तिं प्रपूज्याथ स्वयं श्रीत्रिपुरा भवेत् ।
गुरुपङ्क्तिविहीनस्तु पुरुषः पङ्क्तिवर्जितः ॥ ६६ ॥
सामान्यगुरुपङ्क्तित्वान्न भवेत्पङ्क्तिवर्जितः ।
पुष्पसंकोचमार्गोऽयं मया सिद्धः कृतः प्रिये ॥ ६७ ॥
कृपया परमेशानि साधकानां हिताय च ।
कामराजाख्यगुरवः श्रीविद्याविषये क्रमात् ॥ ६८ ॥
लोपामुद्राख्यविद्याऽऽया गुरूञ्शृणु वरानने ।
परमाद्यशिवश्चाऽऽद्या कामेश्वर्यम्बिका तथा ॥ ६९ ॥
दिव्यौघश्च महौघश्च सर्वानन्दस्ततः परम् ।
प्रज्ञादेव्यम्बिका पश्चात्प्रकाशः सप्तमो भवेत् ॥ ७० ॥
दिव्याः पराख्यगुरवो लोपामुद्राप्रभामयाः ।
दिव्याश्चित्रश्च कैवल्यदेव्यम्बा च महोदयः[२] ॥ ७१ ॥
सिद्धाः परापरा ज्ञेया मानवौघं शृणु प्रिये ।
विद्या शक्तिश्च विश्वश्च चतुर्थः कोमलो भवेत् ॥ ७२ ॥
पञ्चमस्तु परानन्दो मनोहर इति प्रिये ।
स्वात्मानन्दः सप्तमस्तु प्रतिभोऽष्टम उच्यते ॥ ७३ ॥
अपराख्या इमे देवि गुरवः परिकीर्तिताः ।
पूर्ववद्योजयेत्पश्चादष्टानन्तरमेव च ॥ ७४ ॥
त्रयं वा स्वगुरुं वाऽपि नवान्तं वाऽब्जलोचने ।
दक्षिणामूर्तिशिष्याणां गुरुक्रम उदाहृतः ॥ ७५ ॥
संप्रदाया अनेके च ज्ञातव्याः स्वगुरुक्रमात् ।
संप्रदायविहीनस्य न दद्यात्पङ्क्तिमुत्तमाम् ॥ ७६ ॥
साधारणास्तु गुरवः सर्वभेदेषु वै समाः ।
गुरुक्रमं प्रपूज्याथ यजेदाम्नायदेवताः ॥ ७७ ॥
त्रैलोक्यमोहने देवि सर्वाशापरिपूरके ।
सर्वसंक्षोभणे चक्रे पूर्वाम्नायं प्रपूजयेत् ॥ ७८ ॥

---

१ ख. पङ्क्त्या तु न भ° । २ ख. °ये । चिद्विश्वशक्तीश्वरकाश्च °ये ऋद्धिः शक्तिर्वि[...]
इति पाठान्तरम् ।

सर्वसौभाग्यदे चक्रे तथा सर्वार्थसाधके ।
सर्वरक्षाकरे चक्रे दक्षाम्नायं प्रपूजयेत् ॥ ७९ ॥
मध्यचक्रत्रये देवि पश्चिमाम्नायमर्चयेत् ।
नवचक्रेषु देवेशि कौबेराम्नायमर्चयेत् ॥ ८० ॥
बैन्दवे परमेशानि मध्यसिंहासनं यजेत् ।
अनेनैव प्रकारेण पूजयेत्पञ्च पञ्चिकाः ॥ ८१ ॥
श्रीविद्या च परं ज्योतिः परा निष्कलशांभवी ।
अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ॥ ८२ ॥
श्रीविद्या च तथा लक्ष्मीर्महालक्ष्मीस्तथैव च ।
त्रिशक्तिः सर्वसाम्राज्या पञ्च लक्ष्म्यः प्रकीर्तिताः ॥ ८३ ॥
श्रीविद्या[1] त्वरिता चैव पारजातेश्वरी तथा ।
त्रिपुटा पञ्च[2]बाणेशी पञ्च कल्पलताः स्मृताः ॥ ८४ ॥
श्रीविद्या[3] मूलपीठेशी सुधा श्रीरमृतेश्वरी ।
अन्नपूर्णेति विख्याताः पञ्चैताः कामधेनवः ॥ ८५ ॥
श्रीविद्या[4] सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ।
वाराहीति च संप्रोक्ताः पञ्च रत्नाः प्रकीर्तिताः * ॥ ८६ ॥
मूलविद्या महेशानि श्रीविद्या परिकीर्तिता ।
वारुणान्तं वह्निसंस्थं बिन्दुनादसमन्वितम् ॥ ८७ ॥
वामनेत्रसमायुक्तं लक्ष्मीबीजमुदाहृतम् ।
श्रीबीज तु पराबीजं लक्ष्मीबीजमुदाहृतम् ॥ ८८ ॥
प्रणवं पूर्वमुच्चार्य ह्रीमात्मकं समुच्चरेत् ।
श्रीपुटा चानु कमले कमलाये प्रसीदतु ॥ ८९ ॥
लाये मध्यगतां भूमिं रुद्रस्थाने नियोजयेत् ।
प्रसीद युगुलं दद्याच्छ्रीबीजं भुवनेश्वरीम् ॥ ९० ॥
श्रिया बीजं ततो दद्यान्महालक्ष्मी च (श्च)हृन्मनुः ।
सप्तविंशतिवर्णात्मा महालक्ष्मीमनुर्मतः ॥ ९१ ॥
श्रीबीजं च पराबीजं कामराजं समालिखेत् ।
इयं त्रिशक्तिर्देवेशि त्रिषु लोकेषु दुर्लभा ॥ ९२ ॥

---

* इत आरभ्य श्रीविद्यापूजनस्थाने इत्यन्तो ग्रन्थः ख. पुस्तके नास्ति ।

---

१ ख. पुस्तके °द्या पारिजातेशी पंचबाणेश्वरी तथा । त्रि° इति पाठान्तरम् । २ ख. °च कामेशी ' इति पाठान्तरम् । ३ ख. °द्याऽमृतपी° । ४ ख. °द्या चान्नपूर्णा च मा° इति पाठान्तरम् ।

चन्द्रेण मादनं लक्ष्मीर्देवी दीर्घाक्षिमण्डिता ।
विष्णुक्रूरेश्वरीयुक्ता रित्ययं वैष्णवीयुता (?)॥ ९३ ॥
श्रीबीजसंपुटं कुर्यात्सर्वशास्त्रप्रदायिनी ।
प्रणवं पूर्वमुच्चार्य पराहंसं समुद्धरेत् ॥ ९४ ॥
ततः सोहं शिरो देवि वसुवर्णोऽयमीरितः ।
वेदादिकेवला देवी परा निष्कलशांभवी ॥ ९५ ॥
हंसो जपार्वण त( र्णवस्त )त्र मातृकेति प्रकीर्तिता(तः)
प्रणवं भुवनेशानि वियच्चन्द्राग्निवायवम् ॥ ९६ ॥
भुवनेशीं ध्रुवं चैव सरस्वत्यै नमो लिखेत् ।
इयं तु पारिजातेशी पारिजाततरूपमा ॥ ९७ ॥
काण्डबानेश्वरीविद्या प्रसङ्गात्कथिता मया ।
त्रिबीजं च पराबीजं सकामा त्रिपुटोदिता ॥ ९८ ॥
पञ्चकामेश्वरीविद्या बालान्यासे समीरिता ।
वाग्भवं वामनेत्र च ध्रुवान्तं बिन्दुसंयुतम् ॥ ९९ ॥
मूलपीठेश्वरीविद्या सुगुप्ता कथिता मया ।
पराबीजं तु श्रीबीज बालायामाद्यमक्षरम् ॥ १०० ॥
राज्यदे राजलक्ष्मीति चन्द्रः सर्गविभूषितः ।
विलोमन्यादिबीजानि सुधा श्रीश्च प्रकीर्तिताः(ता) ॥ १०१
वाग्भवं भुवनेशानि श्रीबीजं तदनन्तरम् ।
वियत्तदादिखफलेमित्यवर्णं समालिखेत् ॥ १०२ ॥
वियत्तदादिकं तं च फ्रानित्येव मनुर्मतः ।
चवगतृतीयं तुर्यं मायारेफेन्दुसंयुतम् ॥ १०३ ॥
महाचण्डं समुद्धृत्य संकर्षणीति संलिखेत् ।
कालमहान इत्युक्त्वा वियदिन्दुसमन्वितः(?) ॥ १०४ ॥
मायाबीजं तु कथितः सिद्धलक्ष्म्या महामनुः ।
अन्नपूर्णा च देवेशि उत्तराम्नायकीर्तिता ॥ १०५ ॥
मातङ्गिन्येति चांशं वाङ्मायाश्रीसंपुटं लिखेत् ।
इयं मातङ्गिनी विद्या द्वादशार्णा प्रकीर्तिता ॥ १०६ ॥
वियदग्निसमायुक्ता वामनेत्रविभूषितम् (ता) ।
भुवनेशी महेशानि दुर्लभा भुवनत्रये ॥ १०७ ॥

वाग्भवं पूर्वमुद्धृत्य संबुद्ध्या भगवत्यपि ।
वार्ताली द्वे च वाराही युग्मवाराहमुख्यपि ॥ १०८ ॥
अन्धे अन्धिन्यै नत्यन्तं रुन्धिनी तत्परः परम् ।
जम्भे जम्भिन्यै नत्यन्तं मोहे मोहिन्यै युतं नमः ॥ १०९ ॥
स्तम्भे स्तम्भिन्यै हृद्युक्तममुकं स्तम्भनद्वये ।
सर्वदुष्टप्रदुष्टानां सर्वेषां सर्वमुच्चरेत् ॥ ११० ॥
जिह्वास्तम्भं कुरु द्वंद्वं शीघ्रवश्यं कुरु द्वयम् ।
वाग्यूटचत्रयं वाच मन्त्रपावकवल्लभा ॥ १११ ॥
महाविद्येयमाख्याता सर्वतन्त्रेषु गोपिता ।

श्रीदेव्युवाच—

मन्त्रास्तु कथिता देव सर्वतन्त्रेषु गोपिताः ॥ ११२ ॥
तानाराध्य कथं लोका जायन्ते भुवि दुर्लभाः ।
एतत्सर्वं महादेव कथय त्वं सुविस्तरम् ॥ ११३ ॥

श्रीईश्वर उवाच—

साधु पृष्टं त्वया भद्रे लोकानां हितकाम्यया ।
अविज्ञातमनस्तत्त्वं भजना दुःसुता यथा (?)॥ ११४ ॥
कथ्यतेऽत्र तथा देवि सर्वतन्त्रेषु गोपितम् ।
मन्त्राविशोधनं कुर्यान्मन्त्राणां च विशुद्धये ॥ ११५ ॥
चतुरस्रभुवं भित्त्वा कृत्वा रेखात्रयं त्रयम् ।
वृतः षोडशके चैव ततो वर्णान्समालिखेत् ॥ ११६ ॥
इन्द्राग्निरुद्रनवनेत्रयुगेन दिक्षु
ऋत्वष्टषोडशचतुर्दशभौक्तिकेषु ॥
पातालपञ्चदशवह्निहिमांशुकोष्ठे
वर्णांल्लिखेल्लिपिभवान्क्रमशस्तु धीमान् ॥ ११७ ॥
मन्त्राद्यसाधकानां तु नामार्णः पतति ध्रुवम् ।
सिद्धिस्थावर्णाविज्ञेयं द्वितीयं साध्यनामकम् ॥ ११८ ॥
सुसिद्धं तु तृतीयं स्याच्चतुर्थमरिसंज्ञकम् ।
सिद्धः सिध्यति कालेन साध्यः सिध्यति वा न वा ॥११९॥
सुसिद्धस्तत्क्षणादेव साधकं भक्षयेदरिः ।
सिद्धसिद्धो जपात्सिद्धिर्द्विगुणात्सिद्धसाध्यकः ॥ १२० ॥

सिद्धसुसिद्धः संग्राहात्सिद्धारिर्हन्ति वै द्विजान् ।
साध्यः सिध्यति संक्लेशात्साध्यसाध्योऽतिदुःखकृत्॥१२१॥
साध्यः सुसिद्धो भजनात्साध्यारिः स्वाश्रयं हरेत् ।
सुसिद्धसिद्धोऽध्ययनात्फलं दद्युर्यथेप्सितम् ॥ १२२ ॥
सुसिद्धसाध्यो जपाद्यैः सिद्धिर्यस्मादतोऽन्यथा ।
सुसिद्धे तु सुसिद्धस्तु पूर्वजन्मकृतश्रमात् ॥ १२३ ॥
तस्मात्तु सर्वं सिद्धानां साधको यो जपेन्मनुः ।
अभिचारे रिपोरेवं यदि स्मान्भुविपन्नयोः (?)॥ १२४ ॥
सासिद्धेऽरिविशेषेण स्वकुलान्नाशयेद्ध्रुवम् (?)।
अरिसिद्धस्तु संहन्यादरिसाध्यं तु योषितः ॥ १२५ ॥
अरिसिद्धस्वमन्त्रश्च कुलाच्छादनकृच्छलैः ।
अर्थरिस्वामहामन्त्रप्राप्तेन सुनिश्चितम् (?)॥ १२६ ॥
एतदुक्तं महेशानि त्यक्त्वाऽन्यमतमुत्तमम् ।
स्वप्नलब्धे स्त्रिया दत्ते मालामन्त्रे त्रिबीजके ॥ १२७ ॥
सिद्धादिशोधनं देवी न वै तेषां तु विद्यते ।
श्रीविद्यापूजनस्थाने चक्रराजे महेश्वरि ॥ १२८ ॥
महाकोशेश्वरावृन्दमण्डितासनसंस्थिता ॥ १२९ ॥
सर्वसौभाग्यजननीपादुकां पूजयामि च ।
इत्युच्चार्य परं ज्योतिःकोशाद्यां पूजयेत्सुधीः ॥ १३० ॥
अनेनैव प्रकारेण पूजयेत्पञ्चपाञ्चिकाः ।
शैवं तु दर्शनं देवि बैन्दवे पूजयेत्प्रिये ॥ १३१ ॥
परितो * दर्शनं शाक्तं चक्रस्य परमेश्वरी ।
ब्राह्मं तु दर्शनं पूज्यं भूबिम्बे प्रथमे प्रिये ॥ १३२ ॥
शिवस्य वामतो देवि वैष्णवं दर्शनं यजेत् ।
सृष्टिचक्रे भवेत्सूर्यदर्शनं कमलेक्षणे ॥ १३३ ॥
स्थितिचक्रे तु संपूज्य बौद्धदर्शनमुत्तमम् ।
एवं संपूज्य सकलं श्रीविद्यां परितोषयेत् ॥ १३४ ॥
तर्पणानि पुनर्दद्यात्त्रिवारं तत्त्वमुद्रया ।
अङ्गुष्ठानामिकाभ्यां तु तत्त्वमुद्रेयमीरिता ॥ १३५ ॥

---

* अयं श्लोकः ख. पुस्तकस्थः ।

---

१ ख. °रिपूजये° ।

मायालक्ष्मीमयं बीजयुग्मं पूर्वक्रमेण तु ॥ १३८ ॥
कथितं योजयेद्देवि[1] त्रयं वा परमेश्वरि ।
संपुटक्रमयोगेण चाथवा वीरवन्दिते ॥ १३९ ॥
संयोज्य[2] पूजयेत्सर्वाः क्रमादेव वरानने ।
त्रैलोक्यमोहने चक्रे प्रकटा योगिनीर्यजेत् ॥ १४० ॥
चतुरस्रे चतुर्द्वारे शोभिते सिद्धिदायकाः ।
अणिमां पश्चिमद्वारे दक्षभागे प्रपूजयेत् ॥ १४१ ॥
लघिमामुत्तरद्वारे[3] दक्षभागे प्रपूजयेत् ।
पूर्वद्वारे तु महिमामुत्तरे पूजयेत्प्रिय ॥ १४२ ॥
ईशित्वसिद्धिर्देवेशि दक्षिणाद्वारि पूर्ववत् ।
वशित्वसिद्धिं वायव्ये तेनैव क्रमतो यजेत् ॥ १४३ ॥
प्राकाम्यसिद्धिमीशाने तेनैव क्रमतो यजेत् ।
भुक्तिसिद्धिस्तथाऽऽग्नेये तेनैव क्रमयोगतः ॥ १४४ ॥
इच्छासिद्धिं पूर्वभागे नैर्ऋत्ये च प्रपूजयेत् ।
प्राप्तिसिद्धिः सर्वकामा सिद्धिश्च परमेश्वरि ॥ १४५ ॥
अधोर्ध्वक्रमरूपेण ज्ञातव्ये सुरसुन्दरि ।
ब्राह्मी माहेश्वरी चैन्द्री कौमारी वैष्णवी तथा ॥ १४६ ॥
वाराही च तथा षष्ठी चामुण्डा सप्त मातरः ।
अष्टमी तु महालक्ष्मीः पश्चिमादिक्रमेण हि ॥ १४७ ॥
वामभागे तु संपूज्या वायव्यादि च पूर्ववत् ।
संक्षोभद्रावणाकर्षवश्योन्मादमहाङ्कुशाः ॥ १४८ ॥
खेचरीबीजयोन्याख्यास्त्रिखण्डा च प्रपूजयेत् ।
एताः संपूज्य चक्रेशीं त्रिपुरां पूजयेत्पराम् ॥ १४९ ॥
अणिमासिद्धिपुरतः सर्वकार्यार्थसाधिकाम् ।
सर्वसंक्षोभिणीं मुद्रां दर्शयेत्कमलानने ॥ १५० ॥

---

१ ख. °वि शाम्भवं प° इति पाठान्तरम् । २ ख. संपूज्य° । ३ ख. °रे पश्चिमे पूजयेत्ततः । पू°।

सर्वाशापूरकं चक्रं गुप्तयोगिन्यधिष्ठितम् ।
षोडशारं ततो देवि पूजयेत्कार्यसिद्धये ॥ १५१ ॥
कामाकर्षिणिकां देवि बुध्द्याकर्षिणिकां तथा ।
अहंकाराकर्षिणीं च शब्दाकर्षणरूपिणीम् ॥ १५२ ॥
स्पर्शाकर्षिणिरूपां च रूपाकर्षिणिरूपिणीम् ।
रसाकर्षकरीं चैव गन्धाकर्षणकारिणीम् ॥ १५३ ॥
चित्ताकर्षिणिकां तद्वद्धैर्याकर्षिणिकां प्रिये ।
नामाकर्षिणिकां चैव बीजाकर्षिणिकां तथा ॥ १५४ ॥
अमृताकर्षिणीं चैव स्मृत्याकर्षिणिकां प्रिये ।
शरीराकर्षिणीं चैव आत्माकर्षणरूपिणीम् ॥ १५५ ॥
पश्चिमादिविलोमेन षोडशारे स्वरान्विताः ।
एता नित्याः कलाः पूज्याः स्रवत्पीयूषमण्डलाः ॥ १५६
चक्रेश्वरीं यजेद्देवीं त्रिपुरेशीं समृद्धिदाम् ।
कामाकर्षणरूपायाः पुरतः पूजयेत्प्रिये ॥ १५७ ॥
सर्वविद्राविणीं मुद्रां दर्शयित्वा निवेदयेत् ।
सर्वसंक्षोभणे चक्रे यजेद्गुप्ततराभिधाः ॥ १५८ ॥
अनङ्गकुसुमां प्राच्यां कवर्गेण प्रपूजयेत् ।
दक्षिणे च चवर्गेण तथा चानङ्गमेखलाम् ॥ १५९ ॥
अनङ्गमदनां पश्चाट्टवर्गेण प्रपूजयेत् ।
तवर्गेणोत्तरे पश्चादनङ्गमदनातुराम् ॥ १६० ॥
अनङ्गरेखामाग्नेये पवर्गेण प्रपूजयेत् ।
राक्षसेऽनङ्गवेगां तु यवर्गेण प्रपूजयेत् ॥ १६१ ॥
वायव्ये तु शवर्गेण तथाऽनङ्गाङ्कुशां यजेत् ।
ईशान्ये लक्षवर्गेण पूज्याऽनङ्गादिमालिनी ॥ १६२ ॥
चक्रेश्वरीं यजेद्देवीं ततस्त्रिपुरसुन्दरीम् ।
अनङ्गकुसुमाग्रे च सर्वसाम्राज्यदायिनीम् ॥ १६३ ॥
सर्वाकर्षणमुद्रां च दर्शयेत्सुरवन्दिते ।
चक्रपूजां निवेद्याथ चतुर्थं चक्रमर्चयेत् ॥ १६४ ॥
सर्वसंक्षोभिणी शक्तिः सर्वविद्राविणी तथा ।
सर्वाकर्षिणिका शक्तिः सर्वाह्लादनकारिणी ॥ १६५ ॥

चतुर्दशारे शक्तिस्तु सर्वद्वंद्वक्षयंकरी ॥ १६८ ॥
सर्वसौभाग्यदे चक्रे पश्चिमादिविलोमतः ।
वाममार्गेण देवेशि संपूज्याः सर्वसिद्धिदाः ॥ १६९ ॥
सर्वसंक्षोभिणी शक्तिः पुरतः पूजयेत्ततः ।
चक्रेश्वरीं सिद्धिदात्रीं परां त्रिपुरवासिनीम् ॥ १७० ॥
वश्यमुद्रां प्रदर्श्याथ निवेद्य तदनन्तरम् ।
सर्वार्थसाधके चक्रे दशारे कुलयोगिनीः ॥ १७१ ॥
पूजयेत्सर्वकार्यार्थसिद्धिदाः पञ्चमे क्रमात् ।
सर्वसिद्धिप्रदा देवी सर्वसंपत्प्रदा तथा ॥ १७२ ॥
सर्वप्रियकरी देवी सर्वमङ्गलकारिणी ।
सर्वकामप्रपूर्णा च सर्वदुःखप्रमोचनी ॥ १७३ ॥
सर्वमृत्युप्रशमनी सर्वविघ्ननिवारिणी ।
सर्वाङ्गसुन्दरी देवि सर्वसौभाग्यदायिनी ॥ १७४ ॥
पश्चिमादिविलोमेन दशारे पूजयेदिमाः ।
सर्वसिद्धिप्रदा देवि पुरतश्चक्रनायिकाम् ॥ १७५ ॥
सर्वसिद्धिप्रदां देवि पूजयेत्त्रिपुराश्रियम् ।
सर्वोन्मादनमुद्रां च दर्शयित्वा निवेद्य च ॥ १७६ ॥
सर्वरक्षाकरे चक्रे निगर्भा योगिनीर्यजेत् ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा ततः ॥ १७७ ॥
सर्वज्ञानमयी देवी सर्वव्याधिविनाशिनी ।
सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ १७८ ॥
सर्वानन्दमयी देवी सर्वरक्षास्वरूपिणी ।
सर्वेप्सितार्थफलदा देव्यः सर्वसमृद्धिदाः ॥ १७९ ॥
पश्चिमादिविलोमेन पूजयेत्पङ्क्तियोनिके ।
सर्वज्ञापुरतो देवि चक्रेशीं मालिनीं यजेत् ॥ १८० ॥

---

१ क. °रतः क्रमना° । २ क °द्धक्रिनायिकाम् । ख° ।

महाङ्कुशां महामुद्रां दर्शयित्वा निवेद्य च ।
मध्यचक्रे महेशानि योगिनीः पूजयेत्प्रिये ॥ १८१ ॥
सर्वरोगहरे चक्रे वसुकोणे सुरेश्वरि ।
रहस्ययोगिनीर्देवि वशिन्याद्यास्तु सिद्धिदाः ॥ १८२
पश्चिमादिविलोमेन पूर्वोक्ताः पूजयेत्क्रमात् ।
वशिनीपुरतः पूज्या सिद्धाम्बा चक्रनायिका ॥ १८३ ॥
खेचरीं दर्शयेन्मुद्रां निवेद्यानन्तरं ततः ।
सर्वसिद्धिप्रदे चक्रे त्रिकोणे सर्वकामदे ॥ १८४ ॥
परापररहस्याख्ययोगिनीः परिपूजयेत् ।
पञ्च बाणान्समुच्चार्य कामकामेश्वरीमयान् ॥ १८५ ॥
जम्भनाख्यान्महेशानि पूजयेद्बाणदेवताम् ।
धमात्मकं कामचापं द्वितीयं तु थमात्मकम् ॥ १८६ ॥
कामेश्वर्या मोहनाख्यां पूजयेच्चापदेवताम् ।
द्वितीयं भुवनेशानीपाशयुग्मं वशंकरम् ॥ १८७ ॥
कामेशस्य च कामेश्यास्त्रैलोक्याकर्षणं प्रिये ।
अङ्कुशाख्यं क्रोमात्मबीजं स्तम्भनसंज्ञकम् ॥ १८८ ॥
कामेशस्य च कामेश्या अङ्कुशं पूजयेत्प्रिये ।
षडङ्गावरणाद्बाह्ये समीपे क्रमतो यजेत् ॥ १८९ ॥
पश्चिमादिक्रमेणैव चतुर्दिक्षु प्रपूजयेत् ।
कामेश्वरीं रुद्रशक्तिमाद्यकूटेन चाग्रतः ॥ १९० ॥
द्वितीयेन च कूटेन कामाख्येन च वैष्णवीम् ।
दक्षकोणे समभ्यर्च्य तृतीयेन च पूजयेत् ॥ १९१ ॥
भगमालां ब्रह्मशक्तिमुत्तरे विश्वमातृकाम् ।
चक्रेश्वरीमम्बिकाख्यां कामेशीपुरतो यजेत् ॥ १९२ ॥
बीजमुद्रामुपास्याथ चक्रपूजां निवेदयेत् ।
सर्वानन्दमये चक्रराजे बैन्दवसंज्ञके ॥ १९३ ॥
ब्रह्मरूपे चित्स्वरूपे संविद्रूपे शृणु प्रिये ।
परापररहस्याख्यां योगिनीं त्रिपुरां यजेत् ॥ १९४ ॥

---

१ ख. °र्षणक्षमम् । २ ख. °न वज्राख्यां शक्तिवै° ।

सर्वाम्नायेश्वरीं विद्यालंकृतां ब्रह्मरूपिणीम् ॥ १९७ ॥
उपचारैः समभ्यर्च्य गन्धपुष्पाक्षतादिभिः ।
तर्पणानि पुनर्दद्यात्त्रिवारं मूलविद्यया ॥ १९८ ॥
योनिमुद्रां प्रदर्श्याथ मुद्राः संदर्शयेत्क्रमात् ।
वनस्पतिरसोत्पन्नैः पवित्रै रम्यगन्धिभिः ॥ १९९ ॥
दशाङ्गाद्यैर्धूपवर्यैर्धूपयेत्परमेश्वरीम् ।
( *कस्तूरीकुङ्कुमं देवि गुग्गुलं शालसंभवम् ॥ २०० ॥
चन्दनागरुकर्पूरसिताज्यमधुसंयुतम् ।
धूपयेद्देशिको नित्यं सर्वसौभाग्यसिद्धये ॥ २०१ ॥
धूपमन्त्रेण देवेशि त्रैलोक्यस्यापि दुर्लभम् । )
अभितो वेदिकाचक्रं दीपमाला घृतप्लुताः ॥ २०२ ॥
कर्पूररचिताश्चापि तैलपूर्णास्तु वा यजेत् ।
धूपदीपौ निवेद्याथ तर्पयेत्पूर्ववत्प्रिये ॥ २०३ ॥
आरार्तिकाविधिं कुर्यात्पूर्ववद्देववन्दिते ।
अन्यदारार्तिकं वक्ष्ये सर्वकामप्रपूरकम् ॥ २०४ ॥
स्वर्णादिनिर्मिते पात्रे मध्ये चक्रं लिखेद्बुधः ।
तण्डुलोल्लासितं कृत्वा नवधा कारयेत्ततः ॥ २०५ ॥
नव गोलांश्चन्द्ररूपान्विरच्य तदनन्तरम् ।
शर्करागर्भभरितान्मण्डकान्युग्मरूपकान् ॥ २०६ ॥
विरच्य घटिकाः कार्या योजयित्वा तु सप्तकम् ।
सप्तसप्तप्रकारेण घटिका नव योजयेत् ॥ २०७ ॥
अष्टकोणेषु संस्थाप्य गोलकांश्चोपरि क्षिपेत् ।
चणमुद्रा विकीर्याथ दीपकान्घृतपाचितान् ॥ २०८ ॥

---

* धनुश्चिन्हान्तर्गतो ग्रन्थः ख. पुस्तके नास्ति.

---

१ क. °र्ये श्रीविद्यां च स्व° । २ ख. °रवार्तिकाश्चा° इति पाठान्तरम् । ३ क. °धः । अतिदनं कु° । ४ ख. °कान्कुलनायिके । वि° । ५ ख. °नू । स्व स्तिका °इति पाठान्तरम् ।

मुष्टिकाकृतिमुष्टिश्च स्थापयेत्तत्र तत्र तु ।
दीपान्प्रज्वाल्य पश्चात्तु पञ्चरत्नैः प्रपूजयेत् ॥ २०९ ॥
पञ्चसिंहासनगता विद्यास्तत्र प्रपूजयेत् ।
आमस्तकं समुद्धृत्य नववारं पुनः पुनः ॥ २१० ॥
नवावरणवद्देवि परिभ्राम्य पुनः पुनः ।
उत्तीर्य स्थापयेत्पश्चाद्दीपमालामयं महः ॥ २११ ॥
नेत्रयोः सुस्थिरं ध्यायेदारार्तिकविधिः प्रिये ।
नैवेद्यं षड्रसोपेतं सितापूपादिसंयुतम् ॥ २१२ ॥
शर्करापूरभरितमण्डकैः पायसान्वितम् ।
मुक्ताकर्पूरधवलं शुद्धौदनसुपूरितम् ॥ २१३ ॥
घृतकर्पूरशोभाढ्यं संपूर्णघृतमण्डितम् ।
नानाव्यञ्जनशोभाढ्यं वटकैः कुङ्कुमप्रभैः ॥ २१४ ॥
मापान्नभरितं नानारसपानविराजितम् ।
घृतक्षीरेण भरितं चतुर्मुद्राविराजितम् ॥ २१५ ॥
संकल्प्य परमेशान्यै नित्यहोमविधिं चरेत् ।
मूलेन प्राणसहिता आहुतीः पञ्च होमयेत् ॥ २१६ ॥
षडाहुतीः षडङ्गानां नित्यहोमः प्रकीर्तितः ।
उपविश्याऽऽसने रम्ये वामभागे ततः परम् ॥ २१७ ॥
वहत्करोर्ध्वपुटतः साधको भूमिजानुकः ।
मण्डलं चतुरस्रं तु तन्मध्ये विलिखेत्प्रिये ॥ २१८ ॥
त्रिकोणमध्ये व्योमाख्यं मण्डलं पूजयेत्ततः ।
व्यापकान्ते मण्डलाय हृदन्तो वाग्भवं परम् ॥ २१९ ॥
मुखे कृत्वा पूजनीयं मण्डलं मनुना प्रिये ।
एतन्मण्डलमभ्यर्च्य मण्डलानां चतुष्टयम् ॥ २२० ॥
ईशानवह्निनैर्ऋत्यवायुकोणेषु पूर्ववत् ।
मण्डलानि विधायाथ पूर्ववत्पूजयेत्प्रिये ॥ २२१ ॥
पूर्ववद्बलिदानं च दद्यात्सर्वसमृद्धये ।
बटुकाय महेशानि योगिनीभ्यश्च वल्लभे ॥ २२२ ॥

---

१ क. ग. °णदेवीनो प° । २ ख. °प्रमम् । मा° । ३ ख. °तुर्धा तद्विरा° । ४ ख. °प
ञ्चो° । ५ ख. परम् । 'प्रिये' इति पाठान्तरम् ।

क्षेत्रपालगणेशाभ्यां पूर्ववद्बलिमुत्सृजेत् ।
वामभागे कृतस्याथ मण्डलस्योपरि क्षिपेत् ॥ २२३ ॥
आधारं पूजयेत्तत्र पात्रं चान्नोदकान्वितम् ।
सकारणं मन्त्रयित्वा सर्वभूतबलिं हरेत् ॥ २२४ ॥
षोडशार्णेन मनुना त्रिवारं वीरवन्दिते ।
तारं च भुवनेशानि सर्वविघ्नपदं ततः ॥ २२५ ॥
कृद्भ्यश्च सर्वभूतेभ्यो हुंकारं वह्निवल्लभाम् ।
समुच्चरन्बलिं दद्यान्मुद्रया तत्त्वसंज्ञया ॥ २२६ ॥
बलिपञ्चकमाख्यातं सर्वरक्षाकरं सताम् ।
एकत्र वा पञ्च बलीन्दद्याद्व्यापकमण्डले ॥ २२७ ॥
वामभागे स्थितो देवि सर्वविघ्नहरो भवेत् ।
चक्रमभ्यर्च्य सकलं विधिवत्परमेश्वरि ॥ २२८ ॥
श्रीगुरोः कृपया देवि सर्वज्ञः सर्वतत्त्ववित् ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे उमामहेश्वरसंवादे श्रीविद्यायजनविधिर्नाम षोडशः पटलः ॥ १६ ॥

---

अथ सप्तदशः पटलः ।

---

श्रीदेव्युवाच—

देवदेव महादेव अश्रुतार्थं महेश्वर ।
षोडशाक्षरविद्यायाः श्रीचक्रविधिमुत्तमम् ॥ १ ॥
जपादिकं च यत्सर्वमेकैकाक्षरसाधनम् ।
कथयस्व महेशान यद्यहं तव वल्लभा ॥ २ ॥

ईश्वर उवाच—

शृणु सर्वाङ्गसुभगे श्रीविद्याविधिमुत्तमम् ।
यस्य विज्ञानमात्रेण कर्ता हर्ता स्वयं विभुः ॥ ३ ॥
अनेन विधिना यत्र श्रीचक्रं क्रमसंयुतम् ।
पूज्यते तत्र सकलं वशी कुर्यान्न संशयः ॥ ४ ॥
नगरं वशमायाति देशमण्डलमद्रिजे ।
योषितः सकला वश्या ज्वलत्कामाग्निपीडिताः ॥ ५ ॥

---

१ ख. 'शानीं स° । २ ख. सदा र° । ३ ख. 'लीन्प्रदद्यादेकम° । ४ ख. हरिः ।

विद्याविमूढहृदयाः साधकन्यस्तमानसाः ।
तद्दर्शनेन देवेशि जायन्ते सर्वयोषितः ॥ ६ ॥
अक्षमालां समाश्रित्य मातृकावर्णरूपिणीम् ।
अथ मुक्ताफलमयी वाङ्मोक्षफलदायिनी ॥ ७ ॥
सर्वसिद्धिप्रदा नित्यं सर्वराजवशंकरी ।
यथा मुक्ताफलमयी तथा स्फटिकनिर्मिता ॥ ८ ॥
रुद्राक्षमालिका मोक्षे[1] सर्वसंपत्समृद्धिदा ।
प्रवालमाला वश्ये तु सर्वकार्यार्थसाधिका ॥ ९ ॥
माणिक्यमाला फलदा साम्राज्यफलदायिनी[2] ।
पुत्रजीवकमाला तु विद्यालक्ष्मीप्रदा सताम् ॥ १० ॥
पद्माक्षमालया लक्ष्मीर्जायते महती परा ।
रक्तचन्दनमाला तु[3] सर्वभोगप्रदायिनी ॥ ११ ॥
अक्षमालां प्रपूज्याथ चन्दनेन विलेपिताम् ।
समाश्रित्य जपेद्विद्यां लक्षमात्रं यदा बुधः ॥ १२ ॥
योषितो भ्रमयन्त्येव मनस्तस्य सुनिश्चलम् ।
तदा द्वितीयलक्षं तु प्रजपेत्साधकोत्तमः ॥ १३ ॥
पातालतलनागेन्द्रकन्यकाः क्षोभयन्ति तम् ।
तासां कटाक्षजालैस्तु न मोहं याति साधकः ॥ १४ ॥
तदा लक्षत्रयं कुर्यात्साधकः स्थिरमानसः ।
तृतीयलक्षे संप्राप्ते द्रावयन्ति[4] सुराङ्गनाः ॥ १५ ॥
अभिमानेन सौन्दर्यात्सौभाग्यमदकारिणः ।
साधकं द्रावयन्त्येव ततश्चासौ मनस्थिरः ॥ १६ ॥
तदा लक्षत्रयं साधु सर्वपापनिकृन्तनम् ।
एवं लक्षत्रयजपेद्व्रतस्थः स्वस्थमानसः ॥ १७ ॥
संक्षोभयति भूर्लोकस्वर्लोकतलवासिनः ।
पुरुषा योषितो वश्याश्चराचरमपि प्रिये ॥ १८ ॥
गोरोचनादिभिर्द्रव्यैश्चक्रराजं समालिखेत् ।
अतीव सुन्दरं रम्यं तन्मध्ये प्रतिमां वराम् ॥ १९ ॥

---

१ ख. °क्षे भवेत्सर्वस° । २ क. ग. °म्राज्या शिल्पदा° । ३ ख. तु भोगदा वश्यदा अ° । ४ घ. ग. °यन्त्यसु° ।

ज्वलन्तीं नामसहितां महाबीजाविदर्भिताम् ।
चिन्तयेत्तु ततो देवि योजनानां सहस्रतः ॥ २० ॥
अदृष्टपूर्वा देवेशि श्रुतमात्राऽपि दुर्लभा ।
राजकन्याऽथ वा चार्वी भयलज्जाविवर्जिता ॥ २१ ॥
आयाति साधकं सम्यग्मन्त्रमूढा सती प्रिये ।
चक्रमध्यगतो भूत्वा साधकश्चिन्तयेद्यदा ॥ २२ ॥
उद्यत्सूर्यसहस्राभमात्मानमरुणं तथा ।
साध्यमप्यरुणीभूतं कृत्वा मन्त्रं जपेद्बुधः ॥ २३ ॥
अनेन क्रमयोगेण स्वयं कन्दर्परूपवान् ।
सर्वसौन्दर्यसुभगः कामिनीवल्लभो भवेत् ॥ २४ ॥
सर्वलोकेषु सुभगः सर्वलोकवशंकरः* ।
सर्वरक्तोपचारैस्तु मुद्रासंनद्धविग्रहः ॥ २५ ॥
चक्रं प्रपूरयेद्यस्तु यस्य नाम विदर्भितम् ।
स भवेद्दासवद्देवि धनाढ्यो वाऽपि भूपतिः ॥ २६ ॥
चक्रमध्यगतं कुर्यान्नाम यस्यास्तु योषितः ।
अदृष्टाया महेशानि योनिमुद्राधरो बुधः ॥ २७ ॥
हठादानयते शीघ्रं यक्षिणीं राजकन्यकाम् ।
नागकन्यामप्सरसं खेचरीं वा सुराङ्गनाम् ॥ २८ ॥
विद्याधरीं दिव्यरूपामृषिकन्यां रिपुस्त्रियम् ।
मदनोद्भवसंतापां स्फुरज्जघनमण्डलाम् ॥ २९ ॥
कामबाणप्रभिन्नान्तःकरणां लोलचक्षुषाम् ।
महाकामकलाध्यानयोगात्तु सुरवन्दिते ॥ ३० ॥
क्षोभयेत्स्वर्गभूर्लोकपातालतलयोषितः ।
रोचनाभागमेकं तु भागमेकं तु कुङ्कुमम् ॥ ३१ ॥
अथ भागद्वयं देवि चन्दनं मर्दयेत्समम् ।
एकत्र तिलकं कुर्यात्त्रैलोक्यवशकारिणम् ॥ ३२ ॥
अष्टोत्तरशतावृत्त्या मन्त्रयित्वा वशं नयेत् ।
राजानं नगरं ग्रामं तेन यद्यत्प्रदृश्यते ॥ ३३ ॥

---

* वशंकर इत्यस्याग्रे—साधकानां हितार्थाय सर्वार्थसाधनं प्रिये, इतीदमर्धं ख. पुस्तके वर्तते ।

१ क. °पूजये° ।

मन्त्रिणां परमेशानि तत्सर्वं तस्य वश्यगम् ।
ताम्बूलं धूपमुदकं पत्रं पुष्पं फलं दधि ॥ ३४ ॥
दुग्धं घृतं चूर्णमन्नं वस्त्रं कर्पूरमेव च ।
कस्तूरीं घुसृणं चैला लवङ्गं जातिपत्रकम् ॥ ३५ ॥
फलं वा वस्तु यद्यत्तु सकलं परमेश्वरि ।
शतमष्टोत्तरं जप्त्वा यस्मै कस्मै प्रयच्छति ॥ ३६ ॥
स वश्यो जायते देवि नात्र कार्या विचारणा ।
स्त्रियस्तु सकला वश्या दासीभूता भवन्ति हि ॥ ३७ ॥
जगत्कर्षणमेतत्तु कथितं नान्यथा भवेत् ।
रहस्यस्थानके मन्त्री लिखेद्रोचनया भुवि ॥ ३८ ॥
चारुशृङ्गारवेषाढ्यां सर्वाभरणभूषिताम् ।
प्रतिमां सुन्दरां गीतां विलिख्य सुमनोहराम् ॥ ३९ ॥
तद्भालकण्ठहृन्नाभिजन्ममण्डलयोजिताम् ।
जन्मनाममहाविद्यामङ्कुशान्तर्विदर्भिताम् ॥ ४० ॥
सर्वसंधिषु देहस्य मदनाक्षरमालिखेत् ।
लीनं दाडिमपुष्पाभं चिन्तयेद्देहसंधिषु ॥ ४१ ॥
तदाशाभिमुखो भूत्वा स्वयं देवस्वरूपकः ।
मुद्रां तु क्षोभिणीं बद्ध्वा मन्त्रमष्टशतं जपेत् ॥ ४२ ॥
नियोज्य मदनागारे चन्द्रसूर्यकलात्मके ।
ततो विकलसर्वाङ्गीं कामबाणैः प्रपीडिताम् ॥ ४३ ॥
अनन्यमानसां प्रेमभ्रममाणां मदालसाम् ।
एवमाकर्षयेन्नारीं योजनानां शतादपि ॥ ४४ ॥
मातृकां विलिखेच्चक्रबाह्यतः सकलां प्रिये ।
भूर्जपत्रे स्वर्णपत्रे रौप्यपत्रेऽथ ताम्रजे ॥ ४५ ॥
अवध्यः सर्वजन्तूनां व्याघ्रादीनां विशेषतः ।
तथैव मातृकायुक्तस्वसंज्ञाचक्रमण्डितः ॥ ४६ ॥
कर्पूरकुङ्कुमाद्यैस्तु अजरामरतां लभेत् ।
अनेन विधिना देवि रोचनागरुकुङ्कुमैः ॥ ४७ ॥

१ ख. हि । हठाकर्ष° । २ ख. °वांवर° । ३ ख. °भिगतामानय यो° । ४ क. °ज्य व
मागा° । ५ क. °ज्ञामभ्रम° । ६ ख. °रु चन्दनैः । लिखितं च° ।

विलिखंश्चक्रयोगेण साध्यनाम वरानने ।
विदर्भितं स्वनाम्ना तु यस्मिन्कस्मिन्नपि स्थितम् ॥ ४८ ॥
स्थावरं जङ्गमं चापि सकलं जनमण्डलम् ।
वशी कुर्यान्महेशानि पादाक्रान्तं न संशयः ॥ ४९ ॥
महात्रिपुरसुन्दर्याः कामकूटेन भास्वता ।
एकमेकमवष्टभ्य साध्यनामाक्षराणि च ॥ ५० ॥
बहिरप्यखिलैर्वर्णैर्मातृकायाः प्रवेष्टयेत् ।
हेममध्यगतं कुर्याच्छिखायां वामके भुजे ॥ ५१ ॥
धारयेद्यत्र कुत्रापि त्रैलोक्यवशकारकम् ।
राजेन्द्रमपि देवेशि दासभूतं करोति हि ॥ ५२ ॥
राजानो वाजिनः सर्पा गजा दुष्टा मदोत्कटाः ।
व्याघ्राः केसरिणो मत्ता वश्यास्तस्य भवन्ति हि ॥ ५३ ॥
पूर्वक्रमेण नगरनाम संदर्भ्य शैलजे ।
मध्ये चतुष्पथे वाऽपि चतुर्दिक्षु निधापयेत् ॥ ५४ ॥
महाक्षोभो योषितां तु जनानां महतामपि ।
तथैव सर्वदुष्टानां पुरस्थानां च जायते ॥ ५५ ॥
एतन्मध्यगतां पृथ्वीं सशैलवनगह्वराम् ।
ज्वलन्तीं सर्वराजेन्द्रमण्डितां सागराम्बराम् ॥ ५६ ॥
मासषट्कं चिन्तयेद्यः साक्षात्कामोपमो भवेत् ।
कटाक्षक्षेपमात्रेण नार्यस्तस्य वशाः प्रिये ॥ ५७ ॥
राजानो ब्राह्मणा वैश्याः शूद्राश्च पशवो जगत् ।
दृष्ट्वा त्वाकर्षयेद्देवि त्रैलोक्यं सचराचरम्[1] ॥ ५८ ॥
सपत्नान्नाशयेद्दृष्ट्वा नात्र कार्या विचारणा ।
भूतप्रेतपिशाचांश्च ज्वरांश्चातुर्थिकादिकान् ॥ ५९ ॥
शूलगुल्मादिरोगांश्च दृष्ट्वा नाशयते क्षणात् ।
एतत्सिन्दूरसुभगं रात्रौ संपूजितं प्रिये ॥ ६० ॥
योजनानां शताद्वाऽपि सम्यगाकर्षयेत्स्त्रियम् ।
यदा दिक्षु विदिक्ष्वेवं[2] दिविष्ठानपि सुन्दरि ॥ ६१ ॥

---

१ ख. °म् । दृष्ट्वा विषं नाशयेत्स ना° । २ क. ग. °वं त्रिदिविष्ठं तु सु° ।

वशमानयते शीघ्रं सपुत्रपशुबान्धवान् ।
भूर्जपत्रे समालिख्य रोचनागरुकुङ्कुमैः ॥ ६२ ॥
तन्मध्ये नगरं देशं मण्डलं खण्डमेव च ।
नाम्ना विदर्भितं स्वस्य पूजयित्वा यथाविधि ॥ ६३ ॥
भूमिमध्यगतं कृत्वा त्रैलोक्यं वशमानयेत् ।
अथ वा धारयेत्कण्ठे शिखायां बाहुमूलके ॥ ६४ ॥
यत्र कुत्र स्थितं भद्रे क्षोभयेन्नगरं महत् ।
अर्कक्षीरेण संयुक्तं धत्तूरकरसं तथा ॥ ६५ ॥
रोचनाकुङ्कुमे चैव लाक्षालक्तकसंयुतम् ।
कस्तूरीचन्द्रसंयुक्तमेकीकृत्य ततः परम् ॥ ६६ ॥
चक्रमेतत्समालिख्य यस्य नाम्ना महेश्वरि ।
तस्य व्याघ्रगजव्याधिरिपुसर्पभयादिकम् ॥ ६७ ॥
चोरग्रहजलारिष्टशाकिनीडाकिनीभयम् ।
भयं न विद्यते देवि परमन्त्राभिचारजम् ॥ ६८ ॥
नित्यं संधारयेद्देवि कालमृत्युं विनाशयेत् ॥ ६९ ॥
अथवा मध्यगां देवीं त्रिकोणोभयमध्यगाम् ।
अथ स्वनामसंयुक्तां रोचनाकुङ्कुमाङ्किताम् ॥ ७० ॥
निधाययेच्च सप्ताहाद्दासवत्किंकरो भवेत् ।
पीतद्रव्यैः समालिख्य पीतपुष्पैः समर्चयेत् ॥ ७१ ॥
पूर्वाशाभिमुखो भूत्वा स्तम्भयेत्सर्ववादिनः ।
सहस्रवदनो देवि मूढो भवति तत्क्षणात् ॥ ७२ ॥
नाम्ना यस्य स वाग्मी हि पाषाण इव जायते ।
चक्रं विलिख्य देवेशि महानीलीरसेन तु ॥ ७३ ॥
नाम संयोज्य विधिवद्दक्षिणाभिमुखो बुधः ।
वह्नौ दग्ध्वा महेशानि मारणं वैरिणां प्रिये ॥ ७४ ॥
महिषाश्वपुरीषाभ्यां सम्यगाधृष्य शैलजे ।
गोमूत्रेण च संलिख्य नामसंदर्भ्य पूर्ववत् ॥ ७५ ॥
क्षिप्त्वाऽऽरनालमध्यस्थं विद्वेषणकरं भवेत् ।
कृत्वा रोचनया नाम काकपक्षस्य मध्यगम् ॥ ७६ ॥
लम्बमानं तदाकाशे शत्रूच्चाटनकारकम् ।
महानीलीरोचनाभ्यां दुग्धलाक्षारसेन हि ॥ ७७ ॥

---

१ ख. °रादवसं° । २ ख समीकृत्याथ शै° ।

एतन्मध्यगतां पृथ्वीं नगरीं वा सुलोचने ।
सप्ताहात्क्षोभयेत्सम्यग्ज्वलमानां विचिन्तयेत् ॥ ८० ॥
अथ वक्ष्ये महेशानि महापातकनाशनम् ।
शिवां संपूजयेद्देवि सुगन्धैः कुसुमैः प्रिये ॥ ८१ ॥
महापातकयुक्तात्मा तत्क्षणात्पापहा भवेत् ।
शमीदूर्वाङ्कुराश्वत्थपलाशैरथ वाऽर्कजैः ॥ ८२ ॥
मासेन हन्ति कलुषं सप्तजन्मकृतं नरः ।
पूर्वाशाभिमुखो भूत्वा पीतद्रव्यैः समर्चयेत् ॥ ८३ ॥
पीतस्थाने समालिख्य स्तम्भयेत्सर्ववादिनः ।
उत्तराशामुखो भूत्वा सिन्दूररजसा लिखेत् ॥ ८४ ॥
पूजयेद्विधिवद्विद्वान्सर्वलोकं वशं नयेत् ।
पश्चिमाभिमुखो भूत्वा चन्दनेन समालिखेत् ॥ ८५ ॥
संपूज्य विधिवद्विद्वान्सर्वयोषिन्मनो हरेत् ।
वल्लभो जायते देवि दासीमिव वशं नयेत् ॥ ८६ ॥
यमाशाभिमुखो भूत्वा चक्रं कृष्णं यदाऽर्चयेत् ।
यस्य नामाङ्कितं तस्य मन्त्रहानिः प्रजायते ॥ ॥ ८७ ॥
अग्निराक्षसवायव्यशंभुकोणेषु पूजितम् ।
पूर्ववत्परमेशानि क्रमेण परिपूजितम् ॥ ८८ ॥
स्तम्भविद्वेषणव्याधिशत्रूच्चाटकरं भवेत् ।
रोचनालिखितं चक्रं क्षीरमध्ये क्षिपेद्बुधः ॥ ८९ ॥
सर्ववश्यकरं देवि भवत्येव न संशयः ।
गोमूत्रमध्यगं सम्यक्शत्रूच्चाटकरं भवेत् ॥ ९० ॥
तैलस्थं चक्रराजं तद्विद्वेषणकरं भवेत् ।
ज्वलज्ज्वलनमध्यस्थं शत्रुनाशकरं भवेत् ॥ ९१ ॥
यदेकान्ते चतुर्मार्गे सिन्दूररजसा लिखेत् ।
सर्वबाह्यत आरभ्य यावन्मध्यं महेश्वरि ॥ ९२ ॥

अकारादिक्षकारान्तां मातृकां तत्र विन्यसेत् ।
पूजयेद्रात्रिसमये कुलाचारक्रमेण तु ॥ ९३ ॥
साधकः खेचरो देवि जायते नात्र संशयः ।
गिरावेकतरौ तद्वदर्चयेत्कुलमार्गतः ॥ ९४ ॥
अजरामरतां लब्ध्वा सुखी भवति मान्त्रिकः ।
श्मशाने पूजयेच्चक्रं महाभूतदिने बुधः ॥ ९५ ॥
पूर्वक्रमेण विधिवत्साधकः स्थिरमानसः ।
खड्गसिद्धिं च वेतालसिद्धिं च गुटिकामपि ॥ ९६ ॥
पादुकां जनसिद्धिं च मनःसिद्धिं च धातुदाम् ।
महाविवरसिद्धिं च यक्षिणीचेटकोद्भवाम् ॥ ९७ ॥
सर्वं तल्लभते मन्त्री नात्र कार्या विचारणा ।
अथ वक्ष्ये महेशानि श्रीविद्यापूजनं महत् ॥ ९८ ॥
ब्रह्महत्यादिदोषाणां पुरश्चरणमुत्तमम्[1] ।
रक्तपद्मैर्महेशानि पूजयेच्चक्रमुत्तमम् ॥ ९९ ॥
समस्तरश्मिसहितं नित्याम्नायपुरस्कृतम् ।
कुलाचारक्रमाद्देवि कर्पूरक्षोदमण्डितम् ॥ १०० ॥
मासमात्रेण देवेशि महापातककोटयः ।
जन्मान्तरकृताः सर्वा नाशयेन्नात्र संशयः ॥ १०१ ॥
लक्ष्मीस्तस्य गृहे रम्या सुस्थिरा सुरवन्दिते ।
जपापुष्पैर्महेशानि पूर्ववत्पूजयेच्छिवाम् ॥ १०२ ॥
मासमात्रे क्रमेणैव पूर्ववत्परमेश्वरि ।
ब्रह्महत्यादिपापांश्च[2] पूर्वजन्मकृतान्प्रिये ॥ १०३ ॥
नाशयेन्नात्र संदेहो धनवाञ्जायते बुधः ।
केतकैस्तरुणैः पत्रैः पूर्ववत्पूजयेत्प्रिये ॥ १०४ ॥
उपपातकसंघांश्च मासमात्रेण नाशयेत् ।
सौभाग्यमतुलं तस्य जायते नात्र संशयः ॥ १०५ ॥
शतपत्रैर्मनोरम्यैः पूजयेन्मासमात्रकम् ।
पूर्ववत्परमेशानि पूर्वपापं विनाशयेत् ॥ १०६ ॥
चम्पकैः सुमनोरम्यैः पूर्ववत्पूजयेच्छिवाम् ।

---

१ क. °म्। मलप°। २ ख. °श्च सप्तज°।

मासमात्रेण हन्त्येव पातकाञ्शतजन्मजान् ॥ १०७ ॥
सौभाग्यवान्भवेन्मन्त्री त्रिपुरायाः प्रसादतः ।
श्वेतपद्मैर्महेशानि महद्भिः पूजयेत्पराम् ॥ १०८ ॥
पूर्ववन्नाशयेत्पापं विंशज्जन्मभवं प्रिये ।
मासमात्रेण सकलं मोक्षस्तस्य करे स्थितः ॥ १०९ ॥
बन्धूककुसुमैर्देवि मासमात्रं प्रपूजयेत् ।
त्रैलोक्यं वशगं तस्य पूर्वपापं दहेद्बुधः ॥ ११० ॥
बिल्वपत्रैश्च जलजैः सहैव परिपूजयेत् ।
पूर्ववत्परमेशानि मासमात्रं प्रसन्नधीः ॥ १११ ॥
समृद्धिमान्भवेद्देवि सर्वपापहरः सदा ।
मल्लिकामालतीजातीकुन्दैश्च शतपत्रकैः ॥ ११२ ॥
श्वेतोत्पलैर्मिश्रितैस्तु पूजयेन्मासमात्रकम् ।
कुलाचारक्रमेणैव पातकं शतजन्मजम् ॥ ११३ ॥
ब्रह्महत्यादिजनितं नाशयेन्नात्र संशयः ।
मुक्तिस्तस्य करे देवि वाचा जीवसमो भवेत् ॥ ११४ ॥
अगस्त्यबाणबन्धूकजपारक्तोत्पलैः प्रिये ।
पूर्वक्रमेण संपूज्य मासमात्रं प्रसन्नधीः ॥ ११५ ॥
पातकं नाशयेन्मन्त्री साक्षात्कामसमो भवेत् ।
चम्पकैः पाटलैर्देवि बकुलैर्नागकेसरैः ॥ ११६ ॥
कह्लारैः सिन्दुरै रम्यैः पूर्ववत्पूजयेत्क्रमात् ।
सौभाग्यमतुलं तस्य मासमात्रेण जायते ॥ ११७ ॥
पापं विनाशयेद्देवि यदि जन्मसहस्रजम् ॥ ११८ ॥

श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्याप्रयोगविधिर्नाम सप्तदशः पटलः ॥ १७ ॥

---

अथाष्टादशः पटलः ।

---

[ईश्व]र उवाच—

रत्नपूजाविधानं तु कथयामि तवानघे ।
*पुष्पाणि रचयेद्देवि माणिक्यरचितानि हि ॥ १ ॥

---

* इदमर्धं ख. पुस्तकस्थम् ।

---

१ ख. °पं हरेद्बु° ।

तैस्तु पूजा प्रकर्तव्या चक्रराजस्य पूर्ववत् ।
नानापुष्पैः सुगन्धैश्च कर्पूरक्षोदचन्दनैः ॥ २ ॥
एकविंशतिरात्रेण विंशतिं धरणीभुजाम् ।
दासीभूतां करोत्येव महारोगांश्च नाशयेत् ॥ ३ ॥
सूर्यवत्कान्तिमान्मन्त्री जायते नात्र संशयः ।
मुक्तारत्नैश्च रचयेत्स्वर्णपुष्पाणि सुन्दरि ॥ ४ ॥
तैस्तु पूजा प्रकर्तव्या नानापुष्पैश्च पूर्ववत् ।
एकविंशतिरात्रेण राजपत्न्यो वशाः प्रिये ॥ ५ ॥
कलाकान्तियुतो देवि जायते सुभगः क्षितौ ।
प्रवालघटितैः स्वर्णपुष्पैस्तु बहुभिर्यजेत् ॥ ६ ॥
पूर्ववत्परमेशानि कुलाचारक्रमेण तु ।
पुष्पैश्च विविधैर्देवि त्रिःसप्ताहात्सुरेश्वरि ॥ ७ ॥
क्रूरास्तस्य वशाः सर्वे वैरिवर्गान्विनाशयेत् ।
तथा मरकतक्षिप्तस्वर्णपुष्पैस्तु पूजयेत् ॥ ८ ॥
एकविंशतिरात्रेण नानापुष्पैः क्रमं यजेत् ।
विबुधास्तस्य वरदा वैरी नश्यति नान्यथा ॥ ९ ॥
पुष्परागमहारत्नघटितैः स्वर्णनिर्मितैः ।
कुसुमैः पूजयेच्चक्रं त्रिःसप्ताहात्सुरेश्वरि ॥ १० ॥
सुरास्तस्य वशा देवि बृहस्पतिसमो भवेत् ।
सुवर्णरचितैः पुष्पैर्वज्रकेयूरराजितैः ॥ ११ ॥
एकविंशतिरात्रेण मोहयेज्जगतीमिमाम् ।
देवदैत्या वशास्तस्य जायन्ते नात्र संशयः ॥ १२ ॥
इन्द्रनीलमयैः स्वर्णपुष्पैश्चक्रं समर्चयेत् ।
एकविंशतिरात्रेण तथा नीलैश्च नीरजैः ॥ १३ ॥
वैरिणो नाशमायान्ति शेषा वश्या भवन्ति हि ।
गोमेदघटितैः पुष्पैः सुवर्णस्य यजेद्बुधः ॥ १४ ॥
किंशुकैश्च कुसुम्भैश्च पूर्ववत्परमेश्वरि ।
सप्ताहाद्वैरिणो वश्या घातस्तेषु प्रजायते ॥ १५ ॥
त्रिःसप्ताहान्महापापसंचयं नाशयेत्प्रिये ।
क्रव्यादजीवा वश्या हि भवन्त्येव न संशयः ॥ १६ ॥

१ ख. °रचितैः ए° । २ ख. °केसररा° ।

नवरत्नमयैः स्वर्णपुष्पैर्यदि शिवां यजेत् ॥ १९ ॥
तदा देवा[1] मनुष्याश्च पन्नगा राक्षसादयः ।
सर्वे वश्या भवन्त्येव त्रिःसप्ताहान्न संशयः ॥ २० ॥
जन्मकोटिभवं पापं नाशयेन्नात्र संशयः ।
स्वर्णरत्नमयैः पुष्पैर्नवैरेव[2] प्रपूजयेत् ॥ २१ ॥
तदाऽश्वमेधदशकं कृतं भवति शैलजे ।
स्वर्णरत्नादिपूर्णत्वं यदा नास्ति तदा शृणु ॥ २२ ॥
तैरेव पुष्पैः पूजा तु कर्तव्या साधकोत्तमैः ।
यद्यत्पुष्पं यत्र यत्र दत्तं[3] तत्तत्सुरेश्वरि ॥ २३ ॥
तत्र तत्र प्रदातव्यं न दातव्यं यथेच्छया ।
अलंकारस्वरूपेण पूजयेच्चक्रनायकम् ॥ २४ ॥
केवलं स्वर्णपुष्पैस्तु त्रैलोक्यं स्तम्भयेच्छिवे[4] ।
मासमात्रेण पापानि सप्तजन्मभवान्यपि ॥ २५ ॥
नाशयेन्मोहयेत्सर्वां समुद्रवलयां धराम् ॥ २६ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे श्रीविद्यास्वर्णरत्नपूजाविधिविवरणं नामाष्टादशः पटलः ॥ १८ ॥

---

अथैकोनविंशः पटलः ।

---

श्रीदेव्युवाच—

त्रिपुरा परमा शक्तिस्त्रैलोक्यवशकारिणी ।
एतस्याः परमानन्दसाधनं कथय प्रभो ॥ १ ॥
बीजत्रयस्य देवेश यद्यहं तव वल्लभा ।

ईश्वर उवाच—

एषा विद्या वरारोहे पारम्पर्यक्रमागता ॥ २ ॥

---

१ ख. °वाश्च मुनयः प° । २ क. °नैरो यदि प्र° । ३ क. °त्तं दत्तं सुरे° । ४ ख. °च्छिङ्माः° ।

भवबन्धं घातयन्ती संस्मृता पापहारिणी ।
जपान्मृत्युंजयेशानि ध्याता सर्वार्थसाधिका ॥ ३ ॥
दुःखदौर्भाग्यदारिद्र्यभयघ्नी पूजिता भवेत् ।
विघ्नौघशमनी चैव हवनान्नात्र संशयः ॥ ४ ॥
पृथग्बीजत्रयस्याहं साधनं कथयामि ते ।
शुभ्राम्बरपरीधानो गन्धकर्पूरमण्डनः ॥ ५ ॥
मुक्ताफलस्फुरद्रूपभूषणः शुभ्रमाल्यधृत् ।
शुभमन्दिरसंविष्टो ब्रह्मचर्यसमन्वितः ॥ ६ ॥
पूजयेच्छुभ्रकुसुमैर्नैवेद्यमपि सूज्ज्वलम् ।
पायसं घृतसंपन्नं तथाऽमृतफलौदनम् ॥ ७ ॥
घृतमोदकसंपन्नं नानाशुभ्रान्नपूरितम् ।
नैवेद्यं दर्शयेद्देव्यै वागीश्वर्यै सुरेश्वरि ॥ ८ ॥
उपचारैः सुशुभ्रैश्च साधयेन्मोक्षवाङ्मयम् ।
वाग्भवाख्यां जपेद्विद्यां वागीशीं संस्मरन्बुधः ॥ ९ ॥
कर्पूरधवलां शुभ्रपुष्पाभरणभूषिताम् ।
अत्यन्तशुभ्रवसनां वज्रमौक्तिकभूषणाम् ॥ १० ॥
मुक्ताफलामलमणिजपमालालसत्कराम् ।
पुस्तकं वरदानं च दधतीमभयप्रदाम् ॥ ११ ॥
एवं ध्यायेन्महेशानि सर्वविद्याधिपो भवेत् ।
मूलादिब्रह्मरन्ध्रान्तं स्रवत्पीयूषवर्षिणीम् ॥ १२ ॥
तस्माज्ज्योतिर्मयीं ध्यायेज्जिह्वां दीपस्वरूपिणीम् ।
पाषाणेन समो वाऽपि मूर्खो जीवसमो भवेत् ॥ १३ ॥
अथ कामकलाशक्तिसाधकः परमेश्वरि ।
रक्तालंकारसुभगो रक्तगन्धानुलेपनः ॥ १४ ॥
रक्तवस्त्रावृतः सम्यग्ध्ये कामकलात्मना ।
रक्तपुष्पैश्च विविधैः कुङ्कुमादिभिरर्चयेत् ॥
मूलादिब्रह्मपर्यन्तं स्फुरद्दीपस्वरूपिणीम् ।
बन्धूककुसुमाकारकान्तिभूषणभूषिताम् ॥ १६ ॥

---

१ ख. °मयेन्मन्त्रह° । २ ख. °रद्भूषाभू° । ३ क. °तगोलक° । ४ °रि । मनःसंकल्पशुभ्रो वा सा° । ५ क. °मेयं ध्या° । ६ क. °जिजन्हाग्रे दीर्घर° ।

[illegible] योषितो मानहारकः ।
मनश्चिन्तितयोषित्तु दासीव वशगा भवेत् ॥ १९ ॥
चलच्चलेन्दुसंकाशां तरुणारुणविग्रहाम् ।
चिन्तयेद्योषितां योनौ क्षोभयेत्सुरसुन्दरीः ॥ २० ॥
किं पुनर्मानुषीर्देवि त्रैलोक्यमपि मोहयेत् ।
एषैव चिन्तिता देवी सिन्दूराभा हृदि क्षणात् ॥ २१ ॥
आकर्षयेत्तदा शीघ्रं रम्भां वाऽपि तिलोत्तमाम् ।
रक्तवर्णां स्त्रियं ध्यात्वा तदीयसहसत्तमः (?)॥ २२ ॥
तस्या मूर्ध्नि स्मरेद्बीजान्स्रवत्पीयूषवर्षिणीम् ।
ध्यायन्संमोहयेद्देवि मदनोत्तप्तमानसाम् ॥ २३ ॥
क्षणमात्रेण देवेशि त्रैलोक्यं वशमानयेत् ।
एतत्कामकलाध्यानात्पञ्च कामा वरानने ॥ २४ ॥
मोहयन्ति जगत्सर्वं प्रयोगं शृणु पार्वति ।
पूर्वोक्तकामा देवेशि ज्ञातव्याः पञ्चसंज्ञकाः ॥ २५ ॥
विदर्भ्याद्येन कामेन मन्मथान्तर्गतं कुरु ।
कन्दर्पसंपुटं कृत्वा कोणगर्भगतं ततः ॥ २६ ॥
मकरध्वजसंज्ञं तु सर्वमेतद्वरानने ।
मीनकेतुगतं कुर्यान्मोहयेज्जगतीमिमाम् ॥ २७ ॥
त्रैलोक्यमोहनं नाम योगोऽयं परिकीर्तितः ।
शृणु देवि प्रवक्ष्यामि शक्तिबीजस्य साधनम् ॥ २८ ॥
सृष्टिसंहारपर्यन्तं शरीरे चिन्तयेत्पराम् ।
स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणीम् ॥ २९ ॥
हेमप्रभाभासमानां विद्युन्निकरसुप्रभाम् ।
स्फुरच्चन्द्रकलापूर्णकलशं वरदाभयौ ॥ ३०
ज्ञानमुद्रां च दधतीं साक्षादमृतरूपिणीम् ।
ध्यायन्विषं हरेन्मन्त्री नानाकारव्यवस्थितम् ॥ ३१ ॥

---

१ ख. °यसहसा सतः । २ ख. °षधारि° ।

एतस्याः स्मरणाद्देवि नीलकण्ठत्वमागतः ।
अहं मृत्युंजयो भूत्वा विचरामि जले स्थले ॥ ३२ ॥
वैनतेयसमो मन्त्री विषभारसहस्रनुत् ।
भूतप्रेतपिशाचांश्च नाशयेद्रोगसंचयम् ॥ ३३ ॥
चातुर्थिकज्वरान्सर्वानपस्मारांश्च नाशयेत् ।
अथ त्रिकूटा संपूर्णा महात्रिपुरसुन्दरी ॥ ३४ ॥
चिन्तिता साधकस्याऽऽशु त्रैलोक्यवशकारिणी ।
क्रमेण नाभिहृद्वक्त्रमण्डलस्थाऽरुणप्रभा ॥ ३५ ॥
पद्मरागमणिस्वच्छा चिन्तनात्सुरवन्दिते ।
तस्याष्टगुणमैश्वर्यं सौभाग्यं च प्रजायते ॥ ३६ ॥
तन्नाम संस्मरन्मन्त्री योगिनीनां भवेत्प्रियः ।
मातृचक्रं तस्य काये तेन सार्धं सुखी भवेत् ॥ ३७ ॥
पुत्रवान्देवदेवेशि मन्त्री ध्यानान्न संशयः ।
यदा चक्रस्थिता पूर्णा खेचरी सिद्धिदायिनी ॥ ३८ ॥
चतुःषष्टिर्यतः कोट्यो योगिनीनां महौजसाम् ।
चक्रमेतत्समाराध्य संस्थिता वीरवन्दिते ॥ ३९ ॥
आदौ संबन्धिनि पदे मध्ये बीजाष्टकं बहिः ।
कलां ध्यात्वाऽङ्गनासङ्गे कामराज इवापरः ॥ ४० ॥
पाशाङ्कुशधनुर्बाणैर्मादनैर्मोहयेत्प्रिये ।
त्रैलोक्यसुन्दरीं देवीं किं पुनर्मर्त्ययोषितः ॥ ४१ ॥
तथैव शक्तिसंबन्धशस्त्रैस्तन्मयविग्रहः ।
सिद्धगन्धर्वदेवांश्च वशी कुर्यान्न संशयः ॥ ४२ ॥
एतामाराध्य देवेशि कामः सौभाग्यसुन्दरः ।
हरिश्च परमेशानि त्रिपुरासाधनात्प्रिये ॥ ४३ ॥
त्रैलोक्यमोहनो भूत्वा स्थितिकर्ताऽभवत्सदा ।
एतत्समाराधनेन ब्रह्मा सृष्टिकरोऽभवत् ॥ ४४ ॥
चन्द्रसूर्यौ वरारोहे सृष्टिसंहारकारकौ ॥ ४५ ॥

इति श्रीमज्ज्ञानार्णवे नित्यातन्त्रे त्रिपुराबीजत्रयसाधनविधिर्नामैकोनविंशः पटलः ॥ १९ ॥

---

१ ख. °क्रिमाङ्गशाकैर्मन्त्रीस्त° । २ ख. °पुरां राधयेत्प्रि° ।

